तोयत्यागेन लघुभूतस्यास्य पथि पथ्योपदेशार्थमाह तस्या इति। हे घन, हे मेघ, तोयं जलं गृहीत्वा अग्रतो गच्छेः। तस्याः नर्मदायाः संबन्धि कीदृशं तोयं काननकरिमदैर्वासितं सुरभितं अमुना विन्ध्याद्रेहस्याश्रयत्वमुक्तं। कीदृशैः वनमदगजैः तिक्तैः तिक्तस्वादुर्यो मदः तद्युक्तैः। कीदृक्तोयं जम्बूकुञ्जप्रतिहतरयं जम्बूवृक्षजालैः प्रतिहतः रयः वेगः यस्मिन् तत्। किंलक्षणः त्वं वान्तवृष्टि कृततोयत्यागः जम्बूकुंजप्रतिहतरयं अनेन प्रवाहस्थिरत्ववचनं। यस्मात् अतिवेगेन वहतः पयः पातुं भवान्न शक्ष्यति न प्रभविष्यति। विहितवमनादिशुद्धानां रिक्तकोष्ठत्वेन निःसारं शरीरं मरुद्भिर्भवति एतदर्थान्तरन्यासेन निरूपयति। हि अस्मात् यः कोऽपि रिक्तः क्षीणविभवः स लघुः अनादरणीयः स्यात् पूर्णता समृद्धिः निभृतत्वं गौरवाय आदरार्थं भवति। अन्यार्थे वमनविरेचनादिभिः शुद्धो मनुष्यः लघुः लघुकायः आरोग्ययुक्तः भवति ततः परं पूर्णता भोजनादिकं गौरवाय तुष्टिपुष्ट्यर्थं भवति।

हे घन मेघ, त्वं उपर्युक्तप्रकारेण जलवर्षाकरणेन अतएव वांतवृष्टिः कृतवर्षः कृतजलवमनः अर्थात् गरिष्ठजलं त्यक्त्वा पश्चात् त्वं वनमदगजैः विन्ध्यवनानां मदयुक्ताः ये गजाः तैः कृतजलस्नानेन जलक्रीडया वा तिक्तस्वादुकटुया-रसवज्जातं मदैर्वासितं सुरभितं। पुनः तटप्रदेशसंस्थैः जम्बूवृक्षाणां कुंजैः समूहैः जंबूलताभिर्वा प्रतिहतः स्थगितः अवरुद्धः रयः वेगः यस्य तत् एतादृश नर्मदायाः तोयं आदाय पीत्वा पश्चाद् गच्छेः गमिष्यसि। अन्तःसारं गरिष्ठजलनिभृतं त्वां तुलयितु धारयितुं अनिलः वायुः न शक्ष्यति न समर्थो भविष्यति। अतः गजमदरूपौषधरूपेण नर्मदायाः जलेन पुनः पूर्णता तव गौरवाय आरोग्याय भविष्यति तेन त्व मद्यः मार्गातिक्रमणं करिष्यसि॥ २१॥

Having poured out showers of rains, and taking her waters scented with the pungent rut of wild elephants, and course obstructed by thickets of Jambu trees, you should move ahead. O Cloud! the wind will not now be able to carry you, inside heavy with water. Every thing, when empty, becomes light; fullness contributes to heaviness.

(O Friend! you will have vomitted out your heavy water by showering rains Hence drink some Narmada water rendered fragrant by bitter ichor of wild elephants bathing therein and whose current is impeded by groves of Jambu trees, before you continue your journey. The wind can not now carry you, heavy with water. Deprived

of weight, everything becomes light; but when something goes in by way of food and drink, it imparts strength and stimulation In other words, laxatives drive away refuse from intestines through vomitting or stools Any light food or drink taken thereafter contributes to freshness, delight and vigour. ) 21

नीपं दृष्ट्वा हरितकपिशं केसरैरर्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ।
दग्धारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारंगास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥२२॥

नीपमिति । सारंगाश्चातकाः जललवमुचस्ते तव मार्गमध्वानं सूचयिष्यन्ति । ते हि त्वदर्पितप्रथमोदबिन्दून् आदित्सवः समुत्सुकाः पुरः प्रधावन्ति । ततो मार्गसूचकाः । तेषां मार्गः मेघागमन कुत इति सूचयति । नीपं दृष्ट्वा कदंबकुसुममालोक्य, कीदृशं तत् । हरितकपिशं नीलपीतं कैः केसरैः किंजल्कैः मकरन्दयुक्तैः अर्धरूढैः समुद्गतैः तत जलधरागमने समुल्लसति । न केवलं तदेव कन्दलीश्च कदलीरपि । किं भूताः कंदलीः अधो. आविर्भूतप्रथममुकुलाः सञ्जातनूतनस्फोटकाः क्व अनुकच्छं । कच्छं तटं अनु लक्ष्यीकृत्य निम्नांतरमपि निरूपयति । च पुनः उर्व्याः पृथ्व्याः गन्धं आमोदं आघ्राय सिंचित्वा पृथ्व्याः गंधः स्वाभाविक एव वर्षाजलकणमिश्रायाः पुनर्भूयान् भवतीति युक्तं । ग्रीष्मप्लुष्टेऽरण्यवनेषु अधिकं सुगन्धं । सारं मनोहरं गायन्ति इति सारङ्गाश्चातका भृङ्गा वा । नीपं दृष्ट्वा सरः सरोवरं गच्छन्तीति सारङ्गा मृगाः । कदलीश्चावलोक्य सारं सलिलं गच्छन्तीति सारङ्गा गजाः । ते तव मार्गं सूचयिष्यन्ति ।

हे मेघ, जललवमुचः जलबिन्दुवर्षिणः ते तव मार्गं सारङ्गाश्चातकाः सूचयिष्यन्ति । त्वत्कृतवृष्टेः बिन्दून् आदित्सवः पुरः प्रधावन्ति अनेन मार्गदर्शनं भवति । पुनः मार्गसूचकान् विवेचयति । अर्धरूढैः ऊर्ध्वं बहिर्निर्गतैः केसरैः किञ्जल्कैः तदुपरिस्थाः सुगन्धाकृष्टाः सारङ्गाः भ्रमराः तैराच्छादितं अतः हरितकपिशवर्णं नीपं दृष्ट्वा । पुनश्च अनुकच्छं जलयुक्ताधोभूमौ आविर्भूतप्रथममुकुलाः बहिर्निर्गता ये मुकुलाः फलपोटकाः तद्वत्यो याः कन्दल्यः कदल्यः ताः दृष्ट्वा । पुनश्च दग्धारण्येषु दावाग्निदग्धवनेषु जलवर्षणेन अधिकसौगन्ध्यवान् यो गन्धः स आघ्राय आकृष्टा ये सारङ्गाः हरिणाः एते सर्वे ते तुभ्यं अग्रे गमनयोग्यं मार्गं सूचयिष्यन्तीति ॥ २२ ॥

Seeing the green and brown Kadamba flowers with

half grown filaments and plantain trees manifesting their first buds along the marshes, and smelling the odour of the soil, more fragrant in the burnt up forests, the Sarangas will be pointing out the way for you, showering droplets of water

( O Cloud ! your showers of rain will bring out more fragrance from the ground in the forests The deer smelling this scent, the Chatak birds hovering to catch from the air drops of water poured out by you, the bees flying about in green brown Kadamba trees to smell their half grown filaments and elephants running in haste to eat the plantain trees on water slopes, they all will indicate the path to be pursued by you onward ) 22

अम्भोबिन्दुग्रहणरभसाश्चातकान्वीक्षमाणाः
श्रेणीभूताः परिगणनया निर्दिशन्तो बलाकाः ।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कण्ठानि प्रियसहचरीसंभ्रमालिङ्गितानि ॥ २३ ॥

इदानीं सिद्धोपकारकारित्वेन पयोदं प्रलोभयन्नाह अम्भ इति । हे मेघ, सिद्धाः प्राप्ताष्टगुणैश्वर्या देवविशेषाः त्वां मानयिष्यन्ति पूजयिष्यन्ति । किं कृत्वा त्वद्गर्जितभयेन अभीष्ट-कलत्रालिङ्गितानि आसाद्य प्राप्य । किं भूतानि सोत्कण्ठानि अभिलाषसहितानि कदा स्तनितसमये गर्जितसमये । सिद्धाः किं कुर्वन्तः बलाकाः निर्दिशन्तः कथयन्तः कया परिगणनया एक-द्वि-त्रि-आदि सङ्ख्यया । कथ भूतास्ताः श्रेणीभूताः पङ्क्तिभूताः । सिद्धाः किं कुर्वाणाः चातकान्वीक्षमाणाः । कथ भूतान् तान् अम्भोबिन्दुग्रहणरभसान् । तोयकणस्वीकारोत्सुकान् ।

हे मेघ, अम्भोबिन्दुग्रहणातुरान् चातकान् वीक्षमाणाः आश्चर्यान् पश्यन्तः । श्रेणीभूताः पङ्क्तिबद्धाः बलाकाः कुञ्जडीः परिगणनया एक-द्वि-त्र्यादिसंख्यया निर्दिशन्तः हस्तैर्दर्शयन्तः सिद्धाः सिद्धपुरुषाः स्तनितसमये तव गर्जनाकाले सोत्कण्ठानि भयोत्साहसहितानि प्रियसहचरीणां स्वाङ्गनानां सिद्धाङ्गनाभिः आलिङ्गितानि आसाद्य प्राप्य त्वां मानयिष्यन्ति तव गर्जितकारणेनैव सिद्धाङ्गनानां सोत्कण्ठालिङ्गनानि जातानि इति हेतोः तव सन्मानं करिष्यन्ति ॥ २३ ॥

Looking at the Chatakas intent to catch drops of water and pointing at the female cranes, arrayed in rows, by counting them in order, the Siddhas will welcome you on account of getting lustful embraces from their dear wives, perplexed and excited at your thunder

( O Friend ! gazing with wonder at the Chatakas flying in haste to catch the drops of water, and counting one by one the female cranes arranged in rows, the Siddhas will accord you welcome for having embraces from their wives who, struck with fear and wonder at your thunder, will seek straight the resort of their husbands by a close clasp to them. ) 23.

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते ।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत् ॥ २४ ॥

इदानीं पर्वतानां रमणीयतामालोक्य तत्रैव चिरं स्थास्यतीत्याशंक्य स्वकार्यविलम्बमाशङ्कमानः ततः प्रयाणाय पयोद प्रार्थयन्नाह उदिति । हे मेघ, अह ते तव कालक्षेपं कालविलम्ब गिरौ गिरौ सम्भावयामि । कथम्भूतेऽद्रौ ककुभसुरभौ अर्जुनपुष्पाणां सुगन्धिर्यस्मिस्तत्र । कीदृशस्य ते तव मदभीष्टकार्यार्थे यियासोः जिगमिषोः । अपि अतः कारणात् हे सखे हे मित्र भवान् कथमपि केनाप्युपायेन गन्तुं आशु शीघ्रं व्यवस्येत् उद्यम कुर्यात् । कथम्भूतः सन् । शुक्लापाङ्गैः मयूरैः प्रत्युद्यातः कृताभ्युत्थानः सन् । कथम्भूतैः तैः सजलनयनैः चिरकालसुहृद्दर्शनेन वाष्पपूरितनेत्रैः । किं कृत्वा । वाण्या केकाः इति ध्वनिना स्वागतीकृत्य केकारूप स्वागतमुच्चार्य ।

हे सखे मित्र, मत्प्रियार्थे मत्प्रियायाः कार्यार्थे द्रुतं जिगमिषोः अपि तव पर्वते पर्वते प्रफुल्लितानां ककुभानां अर्जुनवृक्षाणां सुगन्धे कालक्षेपं उत्पश्यामि कालक्षेपो भविष्यतीति आतुरतया सम्भावयामि । अतः केका इति शब्दैः सत्कृत्य सजलनयनैः शुक्लापाङ्गैः मयूरैः प्रत्युद्यातः सम्मुखाभ्युत्थानः सन् कथ अपि कष्टेनापि तत्स्थानं त्यक्त्वा अग्रे गन्तुं भवान् आशु व्यवस्येत् । उद्युक्तः भविष्यसीति यावे ॥ २४ ॥

O friend! I expect that though desirous of going quickly

for the sake of my beloved, you will be delayed for a time on each mountain, radiating fragrance of Kakubha flowers Greeted by peacocks with cries of welcome and eyes full of tears, you should, somehow or other, try to go ahead immediately

( O Cloud ! you desire to travel quickly to deliver my message to my wife, but I am inclined to think that some delay will be caused on mountains on the way, entranced as you will be by the fragrance of flowers of Arjun trees, growing on them Peacocks with corners of eyes white and eyes full of tears of joy will stand in your front and welcome you by their cries Despite that, prepare yourself anyhow to proceed further Fragrance or any other enticement should not detain you 24

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै-
र्नीडारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥ २५ ॥

इदानीं दशार्णदेशप्रशंसाव्याजेन दशार्णदेशान्वर्णयन्नाह । पाण्ड्विति । हे मेघ, दशार्णदेशविशेषा एवंविधा सम्पत्स्यन्ते । क्व सति त्वयि आसन्ने निकटे सति । कथम्भूता दशार्णा । केतकै कुसुमै । कथम्भूतै केतकै सूचिभिन्नै अग्रविकसितै । पाण्डुच्छायोपवनवृतय पाण्डुच्छाया ईषत्पीतयुक्तधवलच्छायायुक्ता उपवना नगरसमीपवर्तिन उद्याना तै वृतय आवृता वेष्टिता । पुन कथम्भूता दशार्णा आकुलग्रामचैत्या आकुलानि व्याप्तानि ग्रामचैत्यानि देवसदनानि वृक्षविशेषा वा येषा ते । कै नीडारम्भै पारावतादिगृहपक्षिभि कृतै नीडाना आलयाना आरम्भै । वर्षागमनात् पूर्वं गृहपक्षिण मालारूप स्वगृह रचयन्ति । येषा गृहबलिभुजा पारावतादीना एतेन अदिघ्ननाभिरामताप्रतिपान्न । पुन कथम्भूता दशार्णा परिणतफलश्यामजम्बूवनान्ता परिणतानि परिपक्वानि फलानि तै परिणतफलै श्यामा कृष्णा जम्बूवनान्ता जम्बूवनप्रान्ता येषु ते । कतिपयदिनस्थायिहंसा । कतिपयदिनानि स्थायिन स्थितिशीला हंसा येषु ते ।

हे मेघ, त्वयि आसन्ने प्राप्ते सति दशार्णसञ्ज्ञका प्रदेशा एतादृशा भवि

प्यन्ति । कीदृशाः निर्गतसूचिरूपाग्रभागैः केतकैः केतकी-केवड़ापोटकैः पाण्डुच्छायोपवनवृतयः पाण्डुवर्णकान्तियुक्तानि उपवनानि नगरनिकटवर्तिनो ये उद्यानाः तैः आवृताः । पुनः गृहबलिभुजः पारावतचटककाकादिगृहसमीपस्थायिनः पक्षिविशेषाः तेषां वर्षागमनकारणात् नीडारम्भैः मालाविरचनकार्यैः आकुला व्याप्ता ग्रामचैत्याः देवायतनानि वृक्षाश्च येषां ते । पुनः परिणतानि पक्वानि फलानि यानि श्यामानि तैः पक्वजम्बूफलैः श्यामवर्णवद्भिः जम्बूवृक्षैः युक्ताः उपवनप्रान्तभागा येषां ते । पुनः कतिपयदिनपर्यन्तं स्थायिनः भवन्ति सौन्दर्येण स्थितिं कुर्वन्ति निवसन्ति हंसा येषु ते । एतादृशा दशार्णदेशाः तव गमनेन भविष्यन्ति ॥ २५ ॥

At your approach, the Dasharna Country will have its garden fences whitened by Ketaki flowers split up at the ends; the trees or the temples in its villages will be resonant with preparations for building nests by domestic birds; the skirts of its Jambu forests will appear black due to ripe fruits and the swans will make a few days, stay there

( O friend ! going further, you will reach the Dasharna country. Hear what it will appear like at your approach. Its gardens will be hued yellowish-white by the blooming of Kevada pods open at the ends. The trees and the temples in its villages will be flocked by pigeons, sparrows and other domestic birds busy building their nests. Its Jambu forests will be beautified by dark ripe fruits. The swans will like to stay there for a few days. ) 25.

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्ध्वा ।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यत्र
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ २६ ॥

हे मेघ, दिक्षु देशे विशेषे सर्वभूमण्डले प्रथितं विख्यातं विदिशा इति लक्षणं नामधेयं यस्यास्तां विदिशानाम्नीं तेषां दशार्णजनपदानां राजधानीं गत्वा प्राप्य । सद्यः तत्क्षणं कामुकत्वस्य सुखान्तर्गतायाः रतिलम्पटस्य कामिनः

अविकल सम्पूर्णं फलं लप्स्यसे लब्ध्वा च पश्चात् यत्र तव गमनस्थाने वेत्रवत्या जलं पास्यतीति । कथम्भूतं जलं तीरोपान्तस्तनितसुभगं तीरोपान्ते नदीतटस्य प्रान्ते कण्ठे–काँठे इति लोके । प्रतिक्षणं जायमाना ये खलखलेति शब्दाः तैः सुभग सुन्दरं मनोज्ञं स्वादु मिष्ट मधुर, चलोर्मि प्रतिक्षणं चलाः चपलाः कल्लोलाः ऊर्मयः तरङ्गाः यस्मिन् तत् एतादृश वेत्रवतीसंज्ञाया नद्याः पयः जलं पास्यसि । कथमिव सभ्रूभङ्गं यथा कश्चित् कामी, वेत्रः कन्दुकः क्रीडायष्टिः तद्वत्याः कामिन्याः सभ्रूभङ्गं भ्रुकुटिभङ्गयुक्तं स्तनितैः तत्कालोचितशब्दैः सुभगं मनोहरं स्वादु मधुर मुखं पिबन् कामुकस्य कामिजनोपभोग्यविलासितायाः फलं लभते तद्वत् ॥ २६ ॥

Reaching its capital named Vidisha, well reputed all the quarters over, you will readily realise even the most fervent desire of a lover; you will be drinking there the sweet water, flowing with a gurgling sound at the banks of the Vetravati, restless with waves, appearing as it were a frowning face.

( O Cloud ! Vidisha, the Capital of Dasharna, is famous throughout the world Reaching it, you will accomplish the most cherished desire of a lover, as you will drink there the sweet water of the Vetravati, flowing with a gurgling sound at the banks with waves surging inside, like a lover kissing the frowning face of a youthful woman, wielding a wand in her hand to play the ball with cajoling words, befitting the occasion, being then uttered. 26

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-
स्त्वत्संपर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः ।
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २७ ॥

इदानीं विदिशाराजधान्याः पार्श्वे पादरे वर्तमानायाः वेत्रवत्याः जलपानात्पूर्वं पश्चाच विश्रांतिः क्व भाविति उपस्थितप्रश्नस्योत्तरं कथयति नीचैरिति ।

हे मेघ, तत्र विदिशाख्यराजधान्यां त्वत्संपर्कात् त्वत्समागमात् प्रौढपुष्पैः वृद्धकुसुमैः अधिरविकसितैः पुष्पयुक्तैः कदम्बवृक्षैः पुलकितं इव सजातरोमाच-

पुलकमिव नीचैः आख्यं नीचनामानं नीचा पर्वत इति प्रसिद्धं गिरिं पर्वतं विश्रामहेतोः विश्रान्त्यर्थं मार्गश्रमापनयनार्थं अधिवसेः आश्रयेथाः रात्रिवासे कुरुष्व। यो नीचैः नामा गिरिः पण्यस्त्रीरतिपरिमलोद्गारिभिः पण्यस्त्रियः पण्यांगनाः वारांगनाः ताभिः सह कृता या रतयः ताभिरुत्पन्नः सुरतसंमर्दोद्भवो यः परिमलः तं उद्गारिभिः आविष्कुर्वद्भिः शिलावेश्मभिः शिलाभिः प्रस्तरैः बद्धैः पर्वतोपरि रचितैः वेश्मभिर्भवनैः नागराणां पौरजनानां उद्दामानि उत्कटानि यौवनानि प्रथयति प्रकटयति ॥ २७ ॥

You should stay there for rest on a mountain called Nichaih, which experiences horripilation at your *touch*, in the form of Kadamba trees with full-blown flowers. The stony mansions on it—redolent of the sweet perfumes used *by prostitutes when sporting—proclaim* the unbridled youth of the city dwellers.

( O Cloud ! there is a mountain named Nichaih near Vidisha, the capital. At your approach, it will appear delighted and horripilated with Kadamba trees in full bloom. You take rest on that mountain for some time. Mansions built with stones on that mountain, emitting the fragrance of perfumes used by harlots during sexual enjoyment, disclose the youthful passions of the townsmen. ) 27.

विश्रान्तः सन् व्रज वननदीतीरजातानि सिञ्चन्
उद्यानानां नवजलकणैर्यूथिकाजालकानि ।
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात् क्षणपरिचितः पुष्पलावीमुखानाम् ॥ २८ ॥

हे मेघ, तत्र नीचगिरौ विश्रान्तः विगतश्रमः सन् विश्रांत्यनन्तरं व्रज अग्रतो याहि। किं कुर्वन् वननदीतीरजातानि नवानि अल्पकालोद्भवानि नदीनां तीरेषु जातानि उत्पन्नानि तृणादीनि नवजलकणैः नवजलबिन्दुभिः वर्षाभिः सिञ्चन्। तथैव मार्गे आगतानां उद्यानानां यूथिकाजालकानि यूथिकासंज्ञकाः सुगंधिपुष्पवल्लयः तासां जालकानि समूहान् मण्डपीरूपेण व्यवस्थितान् सिञ्चन्। तथैव गण्डयोः कक्षयोः कपोलयोः स्वेदस्य सूर्यतापे पुष्पावचयश्रमेण जातस्य स्वेदस्य अपनयनेन प्रमार्जनेन मुहुः लुञ्छनेन स्फेटनेन जाता या पीडा तया क्लांतानि म्लानानि कर्णोत्पलानि कर्णपरिहितकमल-

पुष्पाकारभूषणानि येषां ते तेषाम्। एतादृशानां पुष्पलावीमुखानां पुष्पावचायिकाः मालिनीस्त्रियः मालिपत्न्यः तासां मुखानां छायादानात् क्षणपरिचित मुहूर्तमुपलक्षितः सन् पश्चात् अग्रतो व्रज गच्छ ॥ २८ ॥

Having taken rest, proceed further sprinkling with drops of fresh water the showers of Jasmine creepers in the gardens and other plants grown up recently on the river banks; and acquainting yourself for a while, by providing shade, with the faces of flower-plucking women, whose ear-lotuses have faded on account of the trouble to wipe off the perspiration on their cheeks.

( O Cloud ! go ahead after taking a short rest on that Nicha Mountain On the way, sprinkle your fresh water on the grass etc. freshly grown up on river banks Also wetten with your new water the bowers of Jasmine creepers growing in the gardens on your route. By affording shade to their faces, also evince contact for a time with female gardeners, who have come to pluck flowers in the heat of the sun and whose ear-lotuses have been rendered dirty by constantly wiping off the sweat on their cheeks ) 28.

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तरस्यां
सौधोत्संगप्रणयविमुखो मा स्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वंचितोसि ॥ २९ ॥

इदानीं धर्मकामार्थसाधनाय उज्जयिन्या गमनं प्रति मेघं प्रवर्तयन्नाह वक्र इति।

हे मेघ, उत्तरस्यां उत्तरदिशि प्रस्थितस्य भवतः यदपि यद्यपि पन्था मार्गः वक्रः कुटिलः भवति तथापि वक्रमार्गं स्वीकृत्यापि उज्जयिन्याः सौधोत्संगप्रणयविमुखः मा स्म भूः सौधानां अत्युच्चप्रासादानां उत्संगाः उपरिभागाः आकाशिकाः अगाशीति प्रसिद्धाः तेषां प्रणयः मिलनोद्भूतः स्नेहः तद्विमुखः पराङ्मुखः मा भूयाः। अर्थात् गिरिशिखरसमाः उत्तुंगाः तव विश्रांतिक्षमा ये धवलगृहाः तेषां उत्संगैः अगाशीभिः नित्यं तव गमनागमनेन परिचयात् परस्परं निबद्धो यः प्रणयः स्नेहः तस्य विमुखः मा भूयाः सौधोत्संगान्

मिलित्वा जयन्तेति कृत्वा गच्छे । तत्र उपर्युक्तसौधोत्संगेषु उपरिभागेषु रममाणानां पौराङ्गनानां उज्जयिनीयुवतीनां विद्युद्दामस्फुरितचकितैः विद्युद्दाम्नां विद्युल्लरीणां स्फुरितैः स्फुरणैश्चकितैः तव गमनप्रकाशिका या तव विद्युल्लता तस्या स्फुरणेन भयाश्चर्यौत्सुक्यादिभावयुक्तैः अतएव लोलापांगैः लोलाः चपला चञ्चला ये अपांगाः पर्यंताः कटाक्षाः येषु तैः एतादृशैः लोचनैः नेत्रैः यदि न रमसे तर्हि त्वं वञ्चितोसि निष्फलजन्मासि इति मन्ये ॥ २९ ॥

For you travelling towards the north, the path may be circuitous; yet do not fail to amuse yourself on the palace-galleries of *Ujjayini*; you will be deceiving yourself if you are not charmed there by the eyes of city-damsels having unsteady corners and dazzled by *the flashes of lightning* streaks.

( O Cloud ! you have to travel to the north. Hence your road will be a little circuitous Still however adopt it and do not fail to see the city of Ujjain. Take delight for a while on the balconies and galleries of its lofty palatial buildings You have not to let go your contact with these high mansions as they are places to afford you rest on the way I will think it to be a mistake on your part if you will leave Ujjain without sporting with the eyes of its young women enjoying on high terraces The side glances from the unsteady corners of their eyes, startled by lightning flashes indicating your approach, must surely be availed of by you. ) 29.

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः ।
निर्विन्ध्यायाः पथि भव रसाभ्यंतरं सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ ३० ॥

इदानीं उज्जयिनीं त्यक्त्वा अग्रतः प्रचलितस्य मेघस्य मार्गे आगतवत्याः नद्याः संयोगप्राप्तिरूपसम्बन्धेन मेघं प्रलोभयन्नाह वीचि इति ।

हे मित्र, निर्विन्ध्या नाम नद्याः पथि निर्विन्ध्यां प्रति गतवति मार्गे भव

गच्छ। वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणाया वीचीनां तरंगाणां कल्लोलानां य क्षोभ इतस्ततः प्रपातः प्रसर्पणं तेन स्तनिता शब्दिता ये पक्षिणः तेषां श्रेणिः पंक्तिः सैव काञ्चीगुणः मेखलाबन्धनं यस्या सा तस्याः। स्खलितसुभग उपरिभागात्पाषाणोपरि प्रपातेन सुभगं मनोहरं यथा स्यात् तथा प्रसर्पन्त्या गच्छन्त्या दर्शितावर्तनाभेः दर्शिता प्रकटिता आवर्तः जलानां भ्रमः जलानां वेगेन यो भ्रमः चक्रकुंडलसमानाकारः विभ्रमः विलासः स एव नाभिर्यस्याः सा तस्याः निर्विन्ध्यायाः निर्विन्ध्यानामनद्याः विन्ध्यपर्वतान्निर्गतायाः रसाभ्यन्तरं रसः जलं तस्य अभ्यन्तरं मध्ये सन्निपत्य सगत्य जलगर्भं प्रविश्य पश्चात् पथि भव अग्रतो मार्गे गच्छ। इत्थं तव पत्नीरूपा निर्विन्ध्या नदी त्वत्प्रार्थनारूपेण नाभेः विभ्रमं विलासं दर्शयति इदमेव त्वत्सत्काररूपं तस्या आद्यं प्रणयवचनमस्ति। प्रियेषु प्रियतमेषु अभीष्टेषु विभ्रमो हि नाभ्यादिग प्रदर्शनरूपी विलासः एव स्त्रीणां प्रणयवचनं अस्ति प्रियस्य सत्कारवचनं ह्येव अर्थात् मुखेन सत्कारं प्रार्थनावचनं ता न उच्चारयन्ति। स्त्रियः स्वमुखेन नाभीष्टं प्रार्थयन्ति किन्तु विभ्रमेण अङ्गप्रत्यङ्गदर्शनरूपविलासप्रकटनेन एव प्रार्थनां कुर्वन्ति।

यथा कश्चित्कामी निर्विन्ध्यायाः मुग्धायाः पतिसकाशगमनेन जातो यः क्षोभस्तेन स्तनिताः स्वर्णरौप्यकृता ये विहगाकारकिंकिण्यः तासां श्रेण्याः पंक्त्या रचिता या काञ्चीगुणा कटिमेखला यस्याः। सवेगं पतिसकाशगमनेन जातं यत्स्खलनं मार्गमध्ये पादाङ्गुल्याघाताः तैः सुभगं मनोहरं यथा स्यात् तथा ससर्पन्त्या गच्छन्त्या दर्शिता आवर्तयुक्ता चक्राकारा नाभिर्यस्याः तस्याः युवत्या रसाभ्यन्तरं सुरतरसमनुभूय सन्निपत्य मोदते यथा तथाभूतस्त्वमिति शेषः ॥ ३० ॥

Proceed further on your route after having an amorous intimacy with the Nirvindhya, wearing a girdle—string in the form of a row of birds chirping aloud on account of turbulent waves, flowing in a charming manner owing to stumblings, and displaying her navel—like eddies, for erotic gestures are the first expression of love by women towards *beloved persons*

( O friend, leaving Ujjain, you go along the course of River Nirvindhya Emerge yourself for a while in and taste the water of this river, coming out from Mount Vindhya, She has worn a girdle—string of rows of birds singing swee

tly on account of dashing waves. Her current is charming to look at owing to stumblings against the rocky ground. She exhibits her navel, as it were, by eddies inside. Consider this Nirvindhya to be your wife and have amorous contact with her. for exhibition of a navel is a sign of affection and words of love she has for you. Women are generally reticent in speech. A display by them of several bodily parts like navel etc, expresses their sexual urge towards beloved persons ) 30.

वेणीभूतप्रभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ ३१ ॥

इदानीं नदीनायिकायास्तद्वियोगदुःखसंजातविरहदशावर्णनव्याजेन तस्य कामिनीप्रियत्वं आह । वेणीति ।

हे सुभग सर्वसौन्दर्यगुणालंकृत हे मेघ, तां निर्विन्ध्यां अतीतस्य अतिक्रान्तस्य ते तव अग्रे सिन्धुः नाम नदी भविष्यति आगमिष्यति । कथंभूता सा सिन्धुः वेणीभूतप्रतनुसलिला वेणीभूत केशपाशसदृशं प्रकर्षेण स्तोकीभूतं सलिल जलं यस्याः सा । तटरुहतरुभ्रंशिभिः तटयोः रुहाः स्थिता ये तरवः तेभ्यो भ्रश्यन्तीति तथोक्तैः तीरयोः वर्तिभिः जीर्णपत्रैः तरुभ्यः पतितैः एकपत्रैः पाण्डुच्छाया धवलच्छाया कांतिर्यस्याः सा एतादृशी सा सिन्धुः नाम नदी विरहावस्थया ते सौभाग्यं व्यञ्जयन्ती प्रकटयन्ती सती वर्तते । अतः अवश्यं येन विधिना येन प्रकारेण सा कार्श्यं दौर्बल्य त्यजति परिहरति स विधिः उपायः त्वया भवता एव अवश्य उपपाद्यः घटनीयः ॥ ३१ ॥

O fortunate one, the river Sindhu with its scanty water appearing like a braid of hair, yellowish—white in colour on account of dried up leaves falling from trees on her banks, suggests, by her love-lorn condition, the good luck of yours, who have gone beyond her—the Nirvindhya. You alone have to adopt the remedy by which she will abandon her emaciation.

( O beautiful and virtuous cloud, crossing the river Nirvindhya and going further, you will come to river Sindhu Her current will be less in breadth like a woman's braid of hair She will be coloured white, owing to ripe withered leaves falling inside from huge trees on its banks She will be displaying thus, by her state of separation, your good fortune You should verily find out the means by which her leanness may disappear ) 31

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्
पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम् ।
स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत् खण्डमेकम् ॥ ३२ ॥

इदानीं उज्जयिनीं वर्णयन्नाह प्राप्येति ।

हे मेघ, उदयनकथाकोविदग्रामवृद्धान् उदयनस्य वत्सराजस्य कथा चरित्र तद्विज्ञाने कोविदा ज्ञातेतिहासा उदयनेतिहासचतुरा ग्रामाणा वृद्धा येषु तान् । एतादृशान् अवन्तीन् अवन्तिनाम्ना प्रसिद्धान् मालवदेशान् प्राप्य । पूर्वोद्दिष्टा प्रथमकथिता श्रीविशाला लक्ष्मीसंपदैश्वर्यादिविविधप्रकारैर्विशाला विस्तीर्णां विशाला इत्यपरनाम्ना प्रसिद्धा उज्जयिनीं अनुसर गच्छ । सुचरितफले सदाचारादिधर्माणा यत् फल तस्मिन् स्वल्पीभूते पुण्याना स्तोकीभूते सति दिव स्वर्गान् गा गताना पृथिवीं प्राप्ताना नृणा शेषै अवशिष्टै पुण्यै पृथिव्या हृत आनीत कान्तिमत् प्रकाशमान दिव स्वर्गस्य खण्ड भाग इव उज्जयिनी नगरी वर्तते ॥ ३२ ॥

Having reached the Avanti country, whose old village folk are conversant with Udayana legends, approach the aforesaid City of Visala, abounding in wealth and appearing as it were a brilliant fragment of heaven, taken off by the remaining merits of the denizens of heaven who alight to the earth, when the fruit of their good deeds dwindles down

( O Cloud, reaching the Avanti country or Malwa, the old people in whose villages know well the wonderful his-

torical legend of Vasavdatta's abduction by Vatsaraj or Udayana, you do visit the very large and extensive city of Ujjain, also known by the name of Visala—resplendent with wealth, prosperity and luxury. This ujjayini shines like a lustrous patch of heaven, brought down to the earth, by the remaining merits of divine beings, descending here, when their stock of merits runs short ). 32.

दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमंगानुकूलः
सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ३३ ॥

इदानीं उज्जयिनीं वर्णयन्नाह । दीर्घेति ।

हे मेघ, यत्र यस्यां उज्जयिन्यां सिप्रावातः सिप्रानामनदीस्पर्शेन आगतो वातः पवनः स्त्रीणां सुरतग्लानिं संभोगखेदं श्रमं वा हरति अपनयति । कीदृक् सिप्रावातः पटु पाटवयुक्तं सुन्दरं मदकलं हर्षमनोज्ञं सारसानां लक्ष्मणापरनामकपक्षिणां कूजितं शब्दितं दीर्घीकुर्वन् विस्तारयन् । पुनः स्फुटितकमलामोदमैत्रीकषायः प्रत्यूषेषु प्रभातेषु स्फुटितानि विकसितानि यानि कमलानि तेषां आमोदः परिमलः तेन सह मैत्री संपर्कः संयोगः तेन कषायः तुवरास्यस्वादवान् मधुरसुगन्धवान् । प्रार्थनाचाटुकारः प्रियतमः वल्लभः इव प्रार्थनायां सुरतयाच्ञायां मृदूनि प्रियाणि करोतीति अत एव अंगानुकूलः स्पर्शसुखः एतादृशः सिप्रावातः स्त्रीणां सुरतग्लानिं संभोगखेदं हरति अपनयति । प्रियतमोऽपि सारसानां कूजितं निजसुरतकूजितेन दीर्घीकरोति वर्धयति प्रियतमोऽपि अंगानुकूलः हस्तसंवाहनेन स्पर्शसुखदः भवति तद्वत् ॥ ३३ ॥

Where the breeze from the Sipra, early morning, lengthening the sweet cooing of the cranes. under intoxication. fragrant due to its contact with sweet smell of blooming lotuses, and agreeable to the body, wards off the langour of women due to sexual pleasures, like a lover proffering his request in flattering terms.

( O Cloud, in this city of Ujjain, the wind blowing from over the Sipra, prolonging the sharp notes of the cranes in

ecstacy, scented sweet and acrid owing to its contact with the perfume of lotuses up in the morning, affording pleasure at its touch like the cajoling words of a lover making his request for enjoyment, removes the sexual fatigue of women ). 33.

हारांस्तारांस्तरलगुटकान् कोटिशः शंखशुक्ताः
शष्पश्यामान् मरकतमणीनुन्मयूखप्ररोहान् ।
दृष्ट्वा यस्यां विपणिरचितान् विद्रुमाणां च भंगान्
संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः ॥ ३४ ॥

इदानीं उज्जयिनीपुरीसमृद्धिं वर्णयन्नाह । हारानिति ।

हे मेघ, त्वं तां पुरीं उज्जयिनीं आश्रय । यस्यां विपणिरचितान् हट्टस्थापितान् विपणिषु हट्टेषु चातुर्येण व्यवस्थापितान् एतान् रत्नपदार्थान् दृष्ट्वा सलिलनिधयः समुद्राः तोयमात्रावशेषाः विविधरत्नेषु गर्भितं यज्जलं तोयमात्रं जलमात्रं अवशेषं अवशिष्टं येषु ते संलक्ष्यन्ते दृश्यन्ते । अर्थात् विविधपाणिदाररत्नराशिषु गर्भितं बहुमूल्यप्रकाशकं यत्समुद्राणां जलं तत् एतेषु रत्नेष्वेव निविष्टं किमिति प्रेक्षकाणां आश्चर्यं जायते । तान् कान् कानि कानि रत्नानि रत्नाभूषणानि इत्याह । तरलाः तेजोलहरिद्योतकाः मनोहराः हारेषु जटिता बद्धपारदगुटिकास्तासां तारकवत् प्रकाशकत्वात्ताः येषु तान् । पुनः तारान् तारकवत्प्रकाशमानान् तेजोराशिमनोहरान् महामूल्यहीरवैदूर्ययुक्तान् एतादृशान् कोटिशः हारान् । कोटिशश्च शंखाश्च शुक्तयश्च ताः शंखशुक्ती । शष्पश्यामान् बालतृणवत् श्यामच्छायायुक्तहरितवर्णान्, उन्मयूखप्ररोहान् ऊर्ध्वंगताः बहिर्निर्गताः ये मयूखाः प्रकाशकिरणाः तेषां प्ररोहाः लहर्यः येषु तान् एतादृशान् कोटिशः मरकतमणीन् । विद्रुमाणां प्रवालानां भंगाः शतशः प्रवालशलाकाराशयः तान् । एतानि सर्वरत्नानि दृष्ट्वा रत्नाकराः समुद्रा एवेष जलमात्रावशिष्टाः किमिति संलक्ष्यन्ते दृश्यन्ते । अर्थात् उज्जयिन्यां हट्टेषु कोटिशः पाणीदार–बहुमूल्यानां कोटिशो रत्नानां राशयः विद्यन्ते । एतादृशीं सर्वैश्वर्यसमृद्धिधनधान्यादिसिद्धिसम्पन्नां उज्जयिनीं आश्रय दृष्ट्वा पश्चाद्गमनो गच्छ ॥ ३४ ॥

Where, on seeing crores of resplendent necklaces inlaid with shining mercurial beads, conches, shells, emeralds dark green like tender grass and emitting rays of lustre, and pie-

ces of corals stocked for sale in its market, one is led to think of oceans as mere receptacles of water.

( The wealth and the grandeur of Ujjayini, the Cloud is now asked to observe. In its shops, there are exposed for sale crores of necklaces inlaid with star—like shining gems and mercurial beads, conches, crystals, emeralds of dark green colour like fresh grass, shooting their rays upwards, precious pieces of corals and a lot of other jewels. It appears there—from as of all the jewels of the oceans come over in this Ujjain making them gemless with nothing left in them except water. ) 34.

प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे
हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञः ।
अत्रोद्भ्रान्तः किल नलगिरिः स्तम्भमुत्पाट्य दर्पा-
दित्यागन्तून् रमयति जनो यत्र बन्धूनभिज्ञः ॥ ३५ ॥

पुनः उज्जयिन्याः प्राचीनेतिहासेन महत्त्वं वर्णयन्नाह । प्रद्योतेति ।

हे मेघ, यत्र यस्यां उज्जयिनीनगर्याम् अवन्तीदेशे वत्सराजः वत्सदेशनृपः उदयनः प्रद्योतस्य प्रद्योतनाम्नः उज्जयिनीभूपतेः प्रियदुहितरं प्रियपुत्रीं वासवदत्तां जह्रे जहार । अत्र देशे तस्य प्रद्योतभूपतेः एव तालद्रुमवनं ताडवृक्षाणां अरण्यं हैमं सुवर्णमयं अभूत् । अत्र प्रदेशे किल अवश्यं नलगिरिः एतन्नामा महान् प्रचण्डकायः प्रसिद्धहस्ती दर्पात् गर्वपूर्वकं स्तम्भं उत्पाट्य भूम्या उद्घृत्य उद्भ्रान्तः समन्तात् बभ्राम । यत्र उज्जयिन्यां आगन्तून् देशाटनार्थं यात्रार्थं देशान्तरादागतान् बन्धून् प्रजाजनान् अभिज्ञः जनः प्राचीनकथाकुशलो मार्गदर्शको मनुष्यः इति उपर्युक्ताभिरन्याभिर्वा कथाभिः रमयति क्रीडयति रंजयति ॥ ३५ ॥

Vatsaraj abducted here the beloved daughter of Pradyota; here too was the golden palm tree forest of that very king, here wandered about the elephant Nalagiri uprooting his post in madness. Well-informed persons delight their relatives, visiting this place with such details.

(The author now describes the dignity of Ujjain by providing ancient details. O cloud, Vasavdatta, the beloved

daugter of king Pradyot was abducted here by king Udayana, the Lord of the Vatsa country The golden palm—tree forest of that same king Pradyota was too situated in this part The mighty elephant Nalagiri, uprooting his large post from the ground in madness, had roamed about this place People visiting Ujjain, whether on travel or pilgrimage, are regaled with such correct historical details by people well conversant with them

Note I —The word 'Haima' conveys the sense of imparting coolness To state otherwise, by drinking the juice of the palm tree the brain, the heart and the body become cool and the fatigue becomes removed Sitting in its dense shade too gives the same effect The juice of the palm tree is also useful for Rasasiddhi or alchemic experiments With Parad Siddhi being accomplished thereby, heaps of gold can be obtained, The forest of palm Trees can thus be compared with gold ) 35

जालोद्गीर्णरुपचितवपुः केशसंस्कारधूपै-
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखिन्नान्तरात्मा
नीत्वा खेदं ललितवनितापादरागाङ्कितेषु ॥ ३६ ॥

हे मेघ, अस्या उज्जयिन्या कुसुमसुरभिषु पुष्पसमूहै सुगन्धितेषु, ललितवनितापादरागाङ्कितेषु ललिता मनोहरा या वनिता तरुण्य तासा पादरागै चरणेषु अलक्तारुणिमाभिरगै अङ्कितानि चिह्नितानि येषु एतादृशेषु हर्म्येषु धवलगृहेषु जालोद्गीर्णै जाला जालिका गवाक्षा तेषा विवराणि तेभ्य आलभ्य उद्गीर्णा निर्गता तै । केशसस्कारधूपै केशाना मूर्धजाना य सस्कार सौगन्ध्यप्रतिपादनक्रिया तदर्थं कृता सुगन्धितपदार्थाना धूपा तै । उपचितवपु पुष्टशरीर । पुन बन्धुप्रीत्या सुहृत्स्नेहेन भवनशिखिभि हर्म्यमयूरै दत्तनृत्योपहार दत्त वितीर्ण नृत्य एव उपहार पूजा अतिथि सत्कारो यस्य स । पुन अध्वखिन्नान्तरात्मा मार्गपरिश्रमेण खिन्नचित्त त्व खेद नीत्वा श्रम नीत्वा व्यपनीय विश्रम्य पश्चात् शङ्करस्य महाकालस्य स्थान याया इति अग्रे सम्बन्ध ॥ ३६ ॥

Increased in volume by hair-toilet incenses emerging from the latticed windows, with a present of dance offered to you by domestic peacocks out of fraternal affection, and having refreshed yourself from the exhaustion of the journey in the lofty buildings—scented with flowers and bearing the imprint or red lac from the feet of beautiful ladies,

( Oh friend, your body will be fattened by fragrance of incenses, used for hair toilet and coming out from lattices Domestic peacocks having brotherly affection, will offer you a welcome by their dancing You should remove the fatigue of the journey by taking rest for a time in the lofty mansions of this city of Ujjain, fragrant with flowers and bearing the marks of red lac form the feet of beautiful young women.

Thereafter you may proceed to the temple of Lord Mahakaleshwara. ) 36.

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य ।
धौतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३७ ॥

उपर्युक्तप्रकारेण गतश्रमस्त्वं भर्तुः स्वस्वामिनः शंकरस्य कण्ठच्छविः इति कंठस्य एव छविः कांतिर्यस्यासौ शंकरकंठकांतिसदृशः श्यामवर्ण इति गणैः शंकरस्य गणैः भक्तैः सादरं सम्मानपूर्वकं वीक्ष्यमाणः त्वं, कुवलयरजोगन्धिभिः कुवलयानि नीलकमलानि तेषां रजः परागः तद्गन्धिभिः तस्य गंधयुक्तैः । पुनः गंधवत्याः युवतीनां स्नानेन सुगन्धयुक्तायाः सिप्रानद्याः तोयक्रीडानिरतयुवतिस्नानतिक्तैः तोयस्य जलस्य या क्रीडा तस्यां निरताः मग्नाः युवतयः तासां स्नानैः तिक्तस्वादुसुरभयः येषां तैः । एतादृशैः मरुद्भिः पवनैः धौतोद्यानं धौतं स्वच्छं उद्यान वन यस्य तत् । त्रिभुवनगुरोः स्वर्गमृत्युपाताललोकानां स्वामिनः त्रैलोक्यनाथस्य चण्डीश्वरस्य पार्वतीपतेः पुण्य पवित्रं कल्मषपापहारि धाम धर्मभवनं मन्दिरं यायाः गच्छेः ॥ ३७ ॥

Respectfully looked at by Shiva's attendants, since you resemble their master's neck in colour, you should go to the

holy temple of the Lord of the three worlds, the—Chandishwara, which has its garden fanned by breezes from the Gandhavati, fragrant with the pollen of blue lotuses and with bathing-perfumes of young women engagad in sporting in its waters

( Oh Friend, when you will move onwards in Ujjain, the attendants or devotees of Lord Shiva will look at you *with respect, for your colour is the same as that of the neck* of their master, Visit there the holy temple of Shri Mahakaleshwar God Shankar, the lord of the three worlds, worshipped by all and the husband of Parvati, The gardens about this temple are being shaken by breezes from the Sipra, scented with pollen of blue lotuses and tasting acrid on account of baths of young women, sporting in its waters ) 37.

अप्यन्यस्मिन् जलधर महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ।
कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥ ३८ ॥

इदानीं महाकालमन्दिरे पुण्यप्राप्तिं वर्णयन्नाह । अप्यन्येति ।

हे मेघ अन्यस्मिन् अपि काले कस्मिश्चिदपि समये मध्याह्नादौ मध्याह्नोत्तरे वा महाकालायतनं आसाद्य प्राप्य यावत् भानुः सूर्यः ते तव नयनविषयं दृक्पथ न अत्येति न अतिक्रामति न अस्त गच्छति तावत्कालं तत्र त्वया स्थातव्यं । सन्ध्याबलिपटहतां कुर्वन् प्रतिदिनं सन्ध्याया सायकाले शूलिनः महादेवस्य संपाद्यमानः बलिः पूजानैवेद्यादिविधिः तन्निमित्त श्लाघनीयां प्रशस्यां रमणीयां पटहतां पटहः भेरी-नगारा-नामक वाद्यविशेषः तद्भावं कुर्वन् आमन्द्राणां गम्भीराणां गर्जितानां अविकलं समस्तं फलं लप्स्यसे प्राप्स्यसे ॥ ३८ ॥

O Cloud, even if you reach the Mahakal at any other time, you should stay there till the sun passes beyond the range of eyes Serving the laudable purpose of a drum, soun-

ded at the time of the evening adoration of Shiva, you will be getting an ample reward for your rumbling thunders.

( O Cloud, you may reach the Mahakal temple by noon, afternoon or any other time; but you should wait there till sun-set; for in the evening when the worship of Lord Shankar is gone through with all ceremonial rites, you play the praiseworthy part of a drum Or give out your beautiful thunder then, mixing with the noisy beat of drums You will get thereby the complete fruit of your deep thunderings ) 38

पादन्यासक्कणितरशनास्तत्र लीलावधूतै-
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ॥३९॥

इदानीं महाकालमन्दिरे ऐहिकफलप्राप्तिमप्याह । पादेति ।

हे मित्र, तत्र महाकालमन्दिरे तदा संध्यासमये पूजावसरे वेश्याः स्त्रियः देवविलासिन्यः त्वयि कटाक्षान् मोक्ष्यन्ते भवन्तं कटाक्षैः अवलोकयिष्यन्ति इति वर्णयति । पादन्यासक्कणितरशनाः पादन्यासैः चरणनिक्षेपैः क्वणिताः ध्वनिताः रशनाः कटिमेखलाः पादझांकराः यासां ताः । लीलावधूतैः लीलया विशेषाभिनयेन अवधूतैः आन्दोलितैः । रत्नच्छायाखचितवलिभिः रत्नानां छायाभिः शोभाभिः खचिता व्याप्ता वलयः दण्डा येषां तैः । 'वलिश्चामरदण्डोपि गृहदारुमसंश्रये ।' एतादृशैः चामरैः क्लान्तहस्ताः मुहुश्चामराणां विशेषलीलया आन्दोलनेन क्लान्ताः श्रान्ता हस्ताः यासां ताः वेश्याः देवविलासिन्यः त्वत्तः त्वत्समीपात् नखपदसुखान् वल्लभकृतनखक्षतस्थानसुखकारिणः वर्षाग्रबिन्दून् प्रथमजलकणान् आसाद्य प्राप्य ताः मधुकरश्रेणिदीर्घान् भ्रमरावलिगुरुतरान् कटाक्षान् त्वयि मोक्ष्यन्ते भवन्तं कटाक्षैः अवलोकयिष्यन्ति ॥ ३९ ॥

There, having received from you the first drops of rain soothing to nail-marks, the courtesans, whose girdle jingles in brisk movements of the feet and whose hands are tired by gracefully waving the Chamaras with handles inlaid

with lustrous gems, will cast at you long oblique glances resembling rows of bees, [ In the Mahakal temple, the cloud could also enjoy the worldly happiness ]

( O Friend, in that temple of the Mahakal, there will be dancing girls, whose girdles and anklets will be tinkling during the dance and whose hands will be wearied by playfully fanning the Chamars with handles adorned with the lustre of jewels The firstdrops of water showered by you will soothe the nail-marks, inflicted on their bodies by lovers Hence liking you much, they will cast at you side—glances, long as the rows of bees. ) 39.

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजोविकसितजपापुष्परक्तं दधानः ।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ ४० ॥

इदानीं गौरीसमाधानप्रकारान्तरमप्याह । पश्चादिति ।

हे मेघ, पश्चात् बलिपूजाऽऽरातिकक्रियासमये पटहरूपां कर्णमधुरगर्जनाकरणानन्तर पशुपतेः शंभोः नृत्यारंभे ताण्डवप्रारभे नर्तनावसरे उच्चैर्भुजतरुवनं उच्चैः ऊर्ध्वं कृताः भुजा एव तरवः तेषां वनं मण्डलेन मण्डलाकारेण प्रतिबिम्बेन अभिलीनः आश्रितः । पुनः विकसितजपापुष्परक्तं विकसितं उभिद्रं जपाकुसुमं तद्वत् रक्तं लौहित्यं सान्ध्यं संध्याकालीनं तेजः दधानः बिभ्राणः । पुनः शान्तोद्वेगस्तिमितनयन शान्तः उद्वेगो गजचर्मावलोकनभयं ययोस्ते अत एव स्तिमिते निश्चले नयने यस्मिन् कर्मणि यथा स्यात् तथा भवान्या पार्वत्या दृष्टभक्तिः दृष्टा भक्तिर्यस्य सः ईदृशः त्व आर्द्रनागाजिनेच्छां हर । आर्द्रं शोणितार्द्रं यत् नागाजिन तस्य इच्छां रुधिरक्लिन्नगजासुरचर्माभिलाषं हर प्रापय पूरय ॥ ४० ॥

Then, clinging in a circular fashion to the raised arms of Shiva resembling a tree-forest, and assuming the red twilight glimmer of a Japa flower freshly bloomed, you do remove, at the start of the dance, the craving of the Lord of Beasts for the wet skin of an elephant—Your devotion

being observed by Parvati with eyes steady and tranguil without dejection.

( O Cloud, after playing the part of a drum in the evening worship of Lord Shiva, overhang yourself in a circular way over the raised arms of God Shanker, appearing like a forest of trees, when His Tandav–dance commences. Adopt then the colour of the twilight, blood–red like a Jasud flower in bloom, thereby fulfilling the Lord's desire to wetten and redden the elephant–hide worn by him. This type of your devotion will be watched at by Parvati. with eyes peaceful after the removal of fear. In other words, you take over the form full–red in colour as a twilight and encircle Lord Shiva while dancing. When your red reflection will fall on the elephant–hide worn by God Shankar and your drops of rain too do the same, the skin will appear wet and as if soaked with blood, Parvati will thereby be led to think that Shankar has put on the skin of Gajasur recently killed. This will pacify her fear and dejection. Seeing your devotion of this kind, she will be pleased with you. ) 40.

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।
सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मा स्म भूर्विक्लवास्ताः ॥ ४१ ॥

हे मेघ, तत्र उज्जयिन्यां नक्तं रात्रौ सूचिभेद्यैः अतिगहनैः तमोभिः अन्धकारैः रुद्धालोके रुद्धः निरुद्धः स्तम्भितः आलोकः दृष्टिप्रसारः यस्मिन् सः तस्मिन् एतादृशे नरपतिपथे राजमार्गे रमणवसतिं वल्लभावासं गच्छन्तीनां प्रयान्तीनां कनकनिकषस्निग्धया कनकस्य निकषः अतिकृष्णः 'कसोटी' पाषाणः तस्योपरि कृता या स्निग्धा प्रकाशमाना रेखा यथा, स्वर्णरेखायुक्तकसोटीपाषाणमनोज्ञया सौदामिन्या विद्युता उर्वीम् पृथ्वी दर्शय गमनमार्गं दर्शय । तदा विद्युता मार्गदर्शनसमये तोयोत्सर्गस्तनितमुखरो मा स्म भूः, तोयस्य जलस्य उत्सर्गः त्यजनम् तद्युक्तं यत् स्तनितं गर्जनं तेन मुखरः वाचालः शब्दायमानः

मा स्म भूः । कुतः वृष्ट्या गर्जितेन च ताः योषितः विक्लवाः भीरवः स्युः भविष्यन्ति । अथवा ताः विक्लवाः भीरवः सन्ति, पुनः अन्धकारः ताः भयाकुलाः करोति तदा तव वृष्ट्या गर्जनया च विशेषभयाकुलाः भविष्यन्ति, अतस्त्वं ताः विद्युता राजमार्गं दर्शयन् वर्षणयुक्तां गर्जनां मा कुरु ॥ ४१ ॥

There, when, the royal road is obstructed from vision by dense darkness, point out, by your lightning, glistening like a streak of gold on a touch-stone, the path to women *going to their lovers,* abodes at *night,* Make *not then* the noise by your thunder and downpour of water, since they are nervous

( O Cloud, in that city of Ujjain when nothing can bo seen on the high way owing to dense darkness, you show, by your flashes of lightning—appearing like a streak of gold *on a smooth black touch-stone—the path to women, repai*ring to their lovers' residence at night Be careful not to thunder and shower your water at that time It will inspire fear in them They are by nature timid The darkness of the night makes them nervous Added to this, if you will rain and thunder, they will be more confused and greatly afraid Hence remain silent and guide them to their path by your lightning ) 41

तां कस्यांचिद् भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः ।
दृष्टे सूर्ये पुनरपि भवान् वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ४२ ॥

इदानीं अग्रतो गमनाय मेघं अभ्यर्थयन्नाह । तामिति ।

हे मेघ, चिरविलसनात् चिरं बहुसमयपर्यन्तं तया सह विलसनं विलासः क्रीडा तस्मात् खिन्नविद्युत्कलत्रः खिन्ना श्रान्ता विद्युत् एव कलत्रं प्रिया यस्य सः भवान् कस्यांचित् सुप्तपारावतायां सुप्ताः निद्रायमाणाः पारावताः यस्यां सा तस्यां भवनवलभ्यां सौधधवलगृहोपरिभूमिकायां तां रात्रिं नीं या सूर्ये दृष्टे सति सूर्योदये जाते सति पुनः अपि अध्वशेषं वाहयेत् अय-

शीघ्रं मार्गं उल्लंघयेत् ततः पुनः प्रयाणं कुरु । सुहृदां मित्राणां अभ्युपेतार्थकृत्याः अभ्युपेतं स्वीकृतं अर्थकृत्यं निर्धारितकार्यं यैस्ते, अंगीकृतकार्यनिष्पादनोत्सुकाः पुरुषाः न मन्दायन्ते न शिथिलीभवन्ति न विलम्बन्ते ॥ ४२ ॥

Having passed that night on *some* lofty mansion roof, where pigeons are asleep, you, whose wife the lightning is fatigued by sporting for a long time, should proceed ahead on your remaining journey, when the sun is seen again. Verily, those who have undertaken a mission from their friends never delay

( O Cloud, by dangling with you for a long time, your wife—the lightning—should also have been tired, So take rest for that whole night on the roof of some high building, where pigeons are lying asleep in their nests. Resume your journey, when the sun rises again the next day; for enthusiastic per ons, who have undertaken *their friends*, never show slackness in accomplishing it. ) 42.

तस्मिन् काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ।
प्रालेयास्रं कमलवदनात् सोऽपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ४३ ॥

हे मेघ, तस्मिन् काले प्रभातसमये तत्र प्रयाणसमये प्रणयिभिः वल्लभैः खण्डितानां दुःखानां योषितां स्त्रीणां नयनसलिलं नेत्रजलं शान्तिं नेयं शमनीयं स्यात्. अतः कारणात् त्वं भानोः वर्त्म सूर्यस्य मार्गं आशु शीघ्रं त्यज सूर्यस्याग्रतो मा भूः । सोऽपि भानुः अपि नलिन्याः पद्मिन्याः कमलवदनात् पद्मरूपात् प्रालेयास्रं प्रालेय तुषार एव अस्र अश्रु जलं हर्तुं प्रत्यावृत्तः पुनरागतः त्वयि कररुधि किरणरोधिनि सति अनल्पाभ्यसूयः अनल्पा अधिका अभ्यसूया विद्वेषः प्रकोपः यस्यासौ स्यात् भविष्यति ॥ ४३ ॥

The tears of disappointed women require to be assuaged at that time by lovers So at once avoid the path of the sun; because when he has returned *to remove tears of dew* from a lotuslike face of a lotus creeper, he will be extremely angry with you, obstructing his rays.

( O Cloud, in the morning when you depart, do not obstruct the path of the rising sun, for wives who are dejected because of day-break, wish that tears on their faces be dried out by the rays of the sun The rising sun also will be in haste to throw his rays to wipe off tears in the form of dew drops on the face of his wife—the lotus creeper The sun will be very angry with you, if you will be an obstacle in this action, being performed by him ) 43

गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या-
न्मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि ॥ ४४ ॥

इदानीं मार्गे आगताया गभीरानामनदीरूपिणीनायिकाया सयोगलाभ वर्णयन्नाह । गभीरेति । हे मेघ कस्यचित् प्रकृतिसुभगस्य स्वभावसुन्दरस्य पुरुषस्य छायात्मापि चित्रादलिखितरूपमपि गभीराया अप्रकटितमनोभावाया स्त्रिया प्रसन्ने प्रीतियुक्ते सानुरागे चेतसि मनसि प्रवेश लभते प्रविशति । तद्वत् तव मार्गे आगताया गभीरानामनद्या प्रसन्ने अतीव निर्मले पयसि जलप्रवाहे ते तव प्रकृतिसुभग छायात्मापि छायास्वरूपी आत्मा अपि प्रवेश लप्स्यते प्रवेश प्राप्स्यते । तस्मात् छायाद्वारा गभीराया तव स्त्रिया प्राप्ते त्वया लब्धसयोगत्वात् अस्या कुमुदविशदानि कमलवत प्रकाशितानि मुक्तासमानकातियुक्तानि चटुलशफरोद्वर्तन चटुलानि चचलानि गमनागमनक्रियया अस्थिराणि शफराणा मत्स्याना उद्वर्तनयुक्तानि प्रेक्षितानि चपलमत्स्यपरावर्तनावलोकितानि त्वदागमनेन वर्षाबिन्दुप्रपातोत्सुकानि मोघीकर्तुं निष्फलानि निरुत्साहानि कर्तुं न अर्हसि । धैर्यात् अल्पमपि धैर्यमवलम्ब्य वृष्ट्या सफलीकृत्य पश्चादग्रतो याया इति भाव ॥ ४४ ॥

Even your naturally attractive reflection will gain entrance into the clear waters of the Gambhira, as into a pure mind, hence it does not befit you to render futile, through insolence, her lotus-like bright glances, in the form of swift springing up of the fish

( O Cloud, the image of handsome person naturally finds a place in the affectionate heart of a woman, sobre in

temperament and not allowing her sexual desires to be exposed. Likewise, your beautiful reflection will have an easy entrance in the clear-waters of the Gambhira river on your way. You and the river being thus united as a husband and a wife, do not fail to appreciate the quick glances of the fish, shining as lotus-like pearls and looking at you in the hope to get raindrops, as you approach. Stay awhile, pour forth your showers on it and move further. ) 44.

तस्याः किंचित् करधृतमिव प्राप्तवानीरशाखं
हृत्वा नीलं सलिलवसनं मुक्तरोधो नितंबम् ।
प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि
ज्ञातास्वादो विपुलजघनां को विहातुं समर्थः ॥ ४५ ॥

इदानीं भूयोपि तस्या विलासैः पयोदं प्रलोभयन्नाह । तस्या इति ।

हे सखे, हे मित्र प्राप्तवानीरशाखं प्राप्ताः वानीरशाखाः वेतसशाखाः एव हस्ताः यस्य तत् । अत एव किंचित् शिथिलं मन्दवेगवत् । अत एव करधृतं इव हस्तावलम्बितं इव स्थितं । नीलं अगाधत्वात् कृष्णाभासं । पुनः मुक्तरोधोनितम्बं मुक्तः नग्नः रोधः तटप्रदेश एव नितम्बः कटिपश्चाद्भागः येन तत् एतादृशं तस्याः गंभीरायाः सलिलं एव वसनं पानीयवस्त्रं हृत्वा पश्चात्कृत्य लंबमानस्य अधोगतस्य ते तव प्रस्थानं गमनं प्रयाणं कथमपि महता कष्टेन भावि । ज्ञातास्वादः आस्वादितरसः सन् विपुलजघनां विपुला विस्तीर्णा पृथ्वी कटितटी यस्यास्तां स्त्रियं विहातुं कः पुरुषः समर्थः स्यात् न कोपि ॥ ४५ ॥

Having removed her dark-blue watery garment, slipped away from hips in the forms of banks and slightly held up by hand as it were since reaching the branches of canes, O friend, the departure of you, hanging low, will take place with-difficulty. Having once enjoyed the taste, who will be able to forego a woman with broad hips ?

( O friend, after removing the watery garb of the river Gambhira, dark blue on account of her great depth, slipped away as to expose the hips but held up as it were by hands in the form of reeds checking the fall, you, hanging low,

will–experience great difficulty in leaving that place. This is what I believe, which man will be able to abandon a woman, whose bodily part below the waist is comely and well–knit with clothes partially slipped away. ' 45.

त्वन्निष्यन्दोच्छ्वसितवसुधागंधसम्पर्करम्यः
स्रोतोरंध्रध्वनितसुभगं दंतिभिः पीयमानः ।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं
शान्तो वायुः परिणमयिता काननोदुम्बराणाम् ॥ ४६ ॥

इदानीं अनुकूलवायोराश्लेषं सूचयन्नाह । त्वन्निति ।

हे मेघ, त्वन्निस्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः तव यः निस्यन्दः जल वर्षणं तेन उच्छ्वसितायाः बाष्पं उद्वमन्त्याः वसुधायाः सुगंधस्य संसर्गेण रमणीयः मनोज्ञः । पुनः दंतिभिः हस्तिभिः स्रोतोरन्ध्रध्वनितसुभगं स्रोतसां रन्ध्राणि नासिकाछिद्राणि तैः यत् ध्वनितं शब्दितं तेन सुभगं यथा स्यात् तथा पीयमानः । पुनः काननोदुम्बराणां वनेषु स्थिता उदुम्बरवृक्षा तेषां फलानि ऊंबराणि अजीराणि परिणमयिता पाचयिता पक्वानि कुर्वन् एतादृशः शान्तः शीतलः वायुः देवपूर्वं गिरिं देवगिरिनामानं पर्वतं प्रति जिगमिषोः यियासोः गन्तुमुत्सुकस्य ते तव नीचैः वास्यति शनैस्त्वा वीजयिष्यति ॥ ४६ ॥

Pleasant on account of its contact with the odour of the earth refreshed by your showers, being drunk by the elephants charmingly with trunks grunting, the cool breeze, which ripens the forest figs, will be blowing gently below you, desirous of reaching the Devagiri.

( O friend, when you will prepare yourself to start for Devagiri, the cool wind, agreeable on account of its contact with the hot smell emerging from the earth after your showers, and appearing beautiful with the grunting of the trunks of the elephants and which ripens the Udumbar fruits in the jungle, will gently fan you. ) 46.

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान् व्योमगंगाजलार्द्रैः ।

रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे संभृतं तद्धि तेजः ॥ ४७ ॥

इदानीं तत्र देवगिरौ स्कन्ददेवस्य पूजनलाभं वर्णयन्नाह । तत्रेति ।

हे मेघ, तत्र देवगिरौ नियतवसतिं निश्चितनिवासं सदा सन्निहितं स्कन्दं कुमारं कार्तिकस्वामिनं, पुष्पमेघीकृतात्मा पुष्पाणां मेघः जलदः पुष्पमेघः तद्रूप एव कृतः आत्मा स्वरूपं येन सः ईदृशः भवान् व्योमगंगाजलार्द्रैः आकाशगंगायाः जलैः आर्द्रैः पुष्पाणां आसाराः वृष्टयः तैः पुष्पासारैः स्नपयतु अभिषिञ्चेत् । वासवीनां ऐन्द्रीणां चमूनां इन्द्रस्य सेनानां रक्षाहेतोः रक्षानिमित्तं नवशशिभृता नवः द्वितीयायाः यः शशी चंद्रः तं अलङ्काररूपेण धारयता चन्द्रमौलिना हुतवहमुखे अग्निमुखे सभृतं धृतं यत् तेजः निजवीर्यं तदसौ शरवणभवो भगवान् स्कन्दः अस्ति । तारकासुरसंहारार्थिना हरेण हैमवत्यां पुत्रमुत्पादयतो वद्धाम वीर्यं धर्तुं अशक्नुवन्त्या सत्यां शिखिमुखे निक्षिप्तं अतस्तं शिखिवाहनः अग्निभूरित्यामनन्ति । तदेनमसाधारणशक्तिधरं कुमारमुपत्रयतस्ते शिवाः सन्तु पन्थान इति ॥ ४७ ॥

Assuming the form of a flowery cloud, you should bathe Skanda, who has decided his residence there, with floral showers, soaked with waters of celestial Ganges; for he is the supra solar lustre, placed by Shiva bearing the new moon, in the mouth of Fire to protect Indra's armies.

(O Cloud, Kartik Swami always stays at Devagiri. Adopt the form of a flowery cloud, and go through his worship with a tribute of flowers, wet with the waters of heavenly Ganges. This Skanda or Kartik Swami is none else but His own Superior lustre placed in the mouth of Fire by Lord Shankar, bearing the crescent moon on head, to afford protection to Indra's armies By worshipping this Kartik Swami, possessed of powers remarkable, your onward journey will be free from obstacles ) 47.

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ।

धौतापांगं हर शशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्तयेथाः ॥ ४८ ॥

हे मेघ, यस्य मयूरस्य ज्योतिर्लेखावलयि, ज्योतिष तेजस लेखा पङ्क्तय तासा वलयानि चन्द्रिकानि विद्यन्त यस्य तत् एतादृश गलित स्वयमेव पतित न बलादुद्धृत । पुन कुवलयदलस्पर्धि नीलोत्पलदलेन सह स्पर्धते इति ईदृश बर्हं पिच्छ भवानी पार्वती पुत्रप्रेम्णा पुत्रस्नेहेन पुत्रवात्सल्येन कर्णे करोति स्वकर्णे धारयति । स्वपुत्रस्याय मयूरो वाहनमिति तत्पिच्छ पुत्रस्नेहेन कर्णोपरि धारयति । पश्चात् पुष्पवर्षया कृतपूजनानन्तर हरशशिरुचा शङ्करस्य चन्द्र तस्य रुक् चन्द्रिका तत निर्गतामृतजलेन धौतापाग क्षालित नेत्रान्त, पावके पावकस्य अग्ने अपत्य पुमान् पावकि स्कन्द तस्य त मयूर, अद्रिग्रहणगुरुभि अद्रे देवगिरिपर्वतस्य ग्रहण प्रतिच्छन्द तेन गुरुभि वृद्धिगतै गर्जितै नर्तयेथा नाटयेथा ॥ ४८ ॥

Thereafter, by your thunderings, deeply echoing in the *mountain, you should cause to dance that peacock of* Kartikeya, whose corners of eyes are illumined by the lustre of Shiva's moon and whose dropped feather, encircled with streaks of lustre, Parvati puts on her ear instead of a blue lotus petal, through affection for her son.

( *Oh cloud, a feather of that Kartik Swami's peacock,* having circles of variegated lines of lustre, bright with moon light, fallen off by itself and resembling a blue lotus, is worn by Parvati on her ear, out of love for her son After worshipping Kartik Swami, you should cause to dance by *your rumblings, deeply echoing in Devagiri,* that peacock of Skanda, whose eyes are bathed white by nectar-like water dripping from moonlight on Shiva's head ) 48

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥ ४९ ॥

इदानी देवगिरि त्यक्त्वाग्रे प्रयातस्य हितमुपदिशन्नाह । आराध्येति ।

हे मेघ, शरवणभवं शराणां वनं शरवणं तत्र भवः जन्म यस्यासौ तं देवं भगवन्तं एनं स्कन्दं, आराध्य संगीतादिभिः स्तुत्वा उपास्य आकाशमार्गे स्वस्थानं प्रयातैः वीणिभिः वीणाभिः वल्लकीभिः संयुक्तैः सिद्धद्वन्द्वैः सिद्धयुग्मैः जलकणभयात् वीणोपरि तोयबिन्दुपतनभयात् मुक्तमार्गः परित्यक्तपंथाः यस्य सः। पुनः उल्लंघिताध्वा अतिक्रान्तमार्गः देवगिरिं त्यक्त्वा अग्रतो गतः। पुनः सुरभितनयालम्भजां सुरभितनयानां गवां आलम्भः यज्ञः तस्माज्जाता स्रोतोमूर्त्या नदीरूपेण भुवि पृथिव्या परिणतां निम्नगा रन्तिदेवस्य दशपुरपतेर्नृपस्य कीर्तिं कीर्तिरूपेण स्थितां विद्यमानां चर्मण्वतीनाम्ना प्रथितां नदीं मानयिष्यन् सत्करिष्यन् सन् व्यालम्बेथाः भजेथाः तां गच्छेः इत्यर्थः ॥ ४९ ॥

Having adored this god born in the forest of Shara grass, you, whose path is kept clear by Siddha couples with lutes in their hands out of fear of water-drops, and who has gone over some way, should hang down awhile respecting Rantideva's glory, sprung from his sacrifice of Surabhi's daughters ( cows ) and assuming on the earth the form of a river.

( O Cloud, Siddha couples returning home by sky-path after worshipping Kartik Swami with their music etc. will keep themselves away from your route, fearing lest your drops of water may spoil the lutes in their hands. Leaving Devagiri, you will reach the river Charmanvati, reminding one of the fame of king Rantideva of Dashpur and which has assumed the form of a river through the prowess of his kine sacrifices. Cows are known as Kamdhenu's daughters. Pay respect to this river and hang down to drink her water. ) 49.

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो दूरमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥५०॥

हे मेघ, शार्ङ्गिणो वर्णचौरे विष्णुवर्णानुकारिणि त्वयि तस्याः चर्मण्वतीनाम्न्याः सिन्धोः नद्याः जलं आदातु ग्रहीतुं त्वयि अवनते नम्रीभूते सति, पृथुं

अपि विस्तीर्णं अपि दूरभावात् विप्रकृष्टत्वात् तनुं लघुं प्रवाहं गगनगतयः आकाशगामिनो देवाः दूरं यावत् दृष्टीः आवर्ज्य प्रसार्य स्थूलमध्येन्द्रनीलं मध्यश्चासौ इन्द्रनीलश्च मध्येन्द्रनीलः स्थूलो मध्येन्द्रनीलो यस्य सः तं एतादृशं एकं मुक्तागुणं इव मुक्तानां एकावलीहारमिव प्रेक्षिष्यन्ते साश्चर्यं अवलोकयिष्यन्ते ॥

When you, resembling Krishna in colour, will stoop down to replenish yourself with her water, the current of that river though broad but appearing slender from afar, will be looked at by those moving in the sky with fixed eyes, as if it were the earth's single-streaked necklace of pearls with a big sapphire at the centre.

( O Cloud, ( when ) you, coloured black like Vishnu, will bend down to take up water from that river Charmanvati, her current though large and broad will appear small and thin to gods, observing it from the sky from a distance with eyes-strained. They will be surprised to see it adorned like rows of pearls inlaid with a large sapphire at the centre represented by you ) 50.

तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम् ।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मबिम्बं
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम् ॥ ५१ ॥

इदानीं पथि नगरयुवतीनयनविलाससुखलाभं दर्शयन्नाह । तामिति ।

हे मेघ, तां चर्मण्वतीम् उत्तीर्य प्रतीर्य परिचितभ्रूलताविभ्रमाणां परिचिताः प्रति वर्षं गमनागमनेन पूर्वत एव परिचिताः भ्रुवः भ्रुकुट्यः लता लहर्यः तासां विलासाः येषु तेषाम् । पक्ष्मोत्क्षेपात् पक्ष्मणाम् उत्क्षेपात् नयनावलीरोम्णाम् उद्घाटनात् निमेषोन्मेषकरणात् उपरि ऊर्ध्वभागे विलसन्तः शोभमानाः कृष्णशारप्रभाः कृष्णाश्च शाराश्च कृष्णरक्तश्वेतमिश्रिताः प्रभाः सौन्दर्याणि येषां तेषां । कुन्दाः डोलराः मुद्गराः–मोगराः वा तेषां पुष्पाणि तेषां क्षेपः घातेन इतस्ततः अवधूननं तस्य अनुगाः अनुसारिणो ये मधुकराः भ्रमराः तेषां श्रियं शोभां मुष्णन्तीति तेषां कुन्दपुष्पावधूननानुसारिभ्रमरोपमानां एतादृशानां दशपुरवधूनेत्रकौतूहलानां दशपुरं रन्तिदेवनृपस्य नगरं तस्य

वध्वः युवतयः तासां नेत्राणां कौतूहलानि विलासाः तेषाम्, आत्मबिम्बं स्वस्वरूपं पात्रीकुर्वन् तासां दृष्टिपथं गच्छन् आत्मानं स्वरूपं प्रत्यक्षीकुर्वन् व्रज अग्रतो गच्छ याहि ॥ ५१ ॥

After crossing that river, you proceed further making yourself an object of curiosity to the eyes of the damsels of Dashapur, familiar with the sportive movements of their creeper-like eyebrows, having dark and variegated lustre flashing up owing to the uplifting of eye-lashes and adopting the beauty of the bees, following Kunda flowers, tossing about.

( O Cloud, crossing that river Charmanvati, you go ahead, showing your form to and enjoying the pleasure of the sportive movements of the eye-brows of young women of King Rantideva's Dashapur. The lifting up of the eye-lashes imparts dark and white colour to their eyes, which appear stealing as it were the beauty of the bees, following jasmine flowers, tossed about by the wind. ) 51.

ब्रह्मावर्तं जनपदमथ च्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद् भजेथाः ।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षत् मुखानि ॥ ५२ ॥

इदानीं पुण्योपार्जननिमित्तं कुरुक्षेत्रे गमनं प्रति मेघं प्रवर्तयन्नाह । ब्रह्मेति ।
हे मेघ, अथानन्तरं ब्रह्मावर्तं नाम जनपदं देशं छायया स्वकीयच्छायया गाहमानः प्रविशन् क्षत्रप्रधनपिशुनं क्षत्राणां क्षत्रियाणां प्रधनं भयंकरं युद्धं तस्य पिशुनं स्मारकं सूचकं तत् कौरवं क्षेत्रं कुरूणां इदं क्षेत्रं-कुरुक्षेत्रं भजेथाः व्रज । यत्र कुरुक्षेत्रे महाभारतयुद्धे गांडीवधन्वा गांडीवं धनुः यस्य सः अर्जुनः शितशरशतैः शितैः तीक्ष्णैः छेदनैः शराणां शतैः असंख्यातशतैः सहस्रैः शरैः राजन्यानां नृपाणां मुखानि अभ्यवर्षत् अभितः सर्वतः सर्वदिक्षु अवर्षत् अपूरयत् चिच्छेद । यथा त्वं धारापातैः वर्षायाः धाराणां प्रपातैः पतनैः कमलानि पूरयसि इव तद्वत् ॥ ५२ ॥

Entering next the Brahmavarta country with your sha-

dow, you should move on to the region of the Kauravas (Kurukshetra) which reminds one of the terrible battle the Kshatriyas, *wherein Arjun showered hundreds of sharp* arrows on the heads of kings, in the same way as you do on the lotuses by your showers.

(O Cloud, leaving Dashapur, you will enter the region of Brahmavarta with your shadow. From there onwards, you go to Kurukshetra, which reminds one of the dire Mahabharat battle between the Kshatriyas In it Arjun, bearing the Gandiva bow, had cut off the heads of kings, showering upon them hundreds of sharp arrows, as you do to the lotuses by your abundant showers ) 52.

हित्वा हालामभिमतरसां रेवतीलोचनांकां
बन्धुप्रीत्या समरविमुखो लांगली याः सिषेवे ।
कृत्वा तासामभिगममपां सौम्य सारस्वतीना-
मन्तःशुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ॥ ५३ ॥

इदानीं कुरुक्षेत्रमाहात्म्यमाह । हित्वेति ।

हे सौम्य, तदा महाभारतयुद्धसमये बन्धुप्रीत्या पाण्डवकौरवस्नेहेन पाण्डवेषु कौरवेषु स्नेहिषु सम्बन्धिषु सुहृत्सु विद्यमानेषु सत्सु लांगली लांगलं हलं यस्यास्तीति बलभद्रः श्रीकृष्णस्य अग्रजो भ्राता समरविमुखः कुरुक्षेत्रयुद्ध-पराङ्मुखः भूत्वा अभिमतरसां अभिमतः अभीष्टः रसः स्वादः यस्याः सा तां, रेवतीलोचनांकां रेवत्याः स्वपत्न्याः लोचनवत् चिह्न यथा रेवतीलोचने मदा-वेशं कुर्वत्स्वतत्स्वरूपां तद्गुणां स्त्रीनेत्रवत् मोहयन्तीं हालां मदिरां हित्वा त्यक्त्वा याः सरस्वत्याः अपः सिषेवे आस्वादयामास । हे सौम्य त्वमपि तासां सारस्वतीनां सरस्वतीनदीस्थानां अपां जलानां अभिगमं पानं कृत्वा अन्तः-शुद्धः अंतरात्मनि श्वेतः अभ्यन्तरनिर्मलः निष्पापः भाविता भविष्यसि कृष्णः श्यामस्तु केवलं वर्णमात्रेण बाह्यवर्णेनैव अभ्रेण मेघेन एव भविष्यसि ॥ ५३ ॥

O Gentle one, having drunk waters of the Saraswati, which Balaram, averse to war on account of love for his kinsmen, made use of, rejecting wine of agreeable taste with Revati's eyes reflected in it. You will be purified at heart, dark only in colour externally.

( O gentle cloud, Balaram, Shri Krishna's elder brother, who had taken no part in the battle of the Mahabharat on Kurukshetra, because of his love and relation with the Kauravas, the Pandavas and others, had made use of waters of the Saraswati river, abandoning sweet-tasting wine he was fond of and attractive like Revati eyes By drinking the water of this river, you too will be rendered white or pure at heart. Inwardly white, you will appear black only externally. ) 53.

तस्माद् गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपंक्तिम् ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शंभोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५४ ॥

इदानीं कुरुक्षेत्रादप्यधिकं पवित्रं तीर्थं वर्णयन्नाह । तस्मादिति ।

हे मेघ, त्वं तस्मात् कुरुक्षेत्रात् अनुकनखलं कनखलतीर्थं अनु लक्ष्यीकृत्य यस्य समीपं शैलराजावतीर्णां शैलराजः हिमवान् तत्र अवतीर्णां आगतां स्वर्गात् पतितां । पुनः सगरतनयानां सगरपुत्राणां स्वर्गगमने सोपानानां पंक्तिरूपां निःश्रेणीमिव निसरणीति लोके एतादृशीं जह्नोः जह्नुनामकराजस्य: कन्यां जाह्नवीं गच्छेः गच्छ । या जाह्नवी गौरीवक्त्रभ्रुकुटिरचनां गौर्याः मुखे सापत्न्य भावात् या भ्रुकुट्याः रचना भ्रूभंगः तां फेनैः डिंडिरपटलैः विहस्य इव अविगणय्य परिहस्य इन्दुलग्नोर्मिहस्ता सती शिवस्य जटाजूटस्थिते इन्दौ चन्द्रमसि लग्ना मिलिता या ऊर्मयः कल्लोला एव हस्ता यस्याः सा शंभोः केशग्रहणं अकरोत् ॥ ५४ ॥

From there, you should go to Jahnu's daughter-the Ganges-, descended from the Himalayas near Kankhal a staircase to heaven for Sagara's sons. Laughing as it were with her foam at the frowning face of Gauri, she caught hold of Shiva's hair with her hands, in the form of waves, touching the moon.

( O Cloud, going onward from Kurukshetra, you will reach a holy place named Kankhal, near where flows the

Ganges. Descended on the Himalayas from the sky and appearing like a flight of steps for Sagara's sons to ascend to heaven, the Ganges, as if laughing with her foam at Gauri's face with knit eye-brows, grasps Shankar's hair, with her hands, in the form of waves, touching the moon on Shiva's head. ) 54.

तस्याः पातुं सुरगज इव व्योम्नि पूर्वार्धलम्बी
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छायया सा
स्यादस्थानोपगतयमुनासंगमेनाभिरामा ॥ ५५ ॥

हे मेघ, तिर्यक् तिरश्चीनः यथा स्यात् तथा भूत्वा, तस्याः व्योम्नि आकाशे आकाशगंगायाः जलं पातुमुद्यतः पूर्वार्धलम्बी पूर्वकायेन शुंडाप्रार्धशरीरेण लंबायमानः सुरगजः दिग्गजः इव, गंगायाः अच्छस्फटिकविशदं स्वच्छः निर्मलः स्फटिकोपलः तद्वन्निर्मलं अम्भः जलं पातुं इव त्वं तर्कयेः विचारयेश्चेत् तदा सपदि त्वरया वेगेन स्रोतसि प्रवाहे संसर्पन्त्या प्रसरन्त्या भवतः छायया सा गंगा अस्थानोपगतयमुनासंगमेन अस्थानात् प्रयागादन्यस्थानात् उपगतः इह कनखले आगतः प्राप्तः यमुनायाः संगमस्तेन गंगायमुनयोः समागमस्तेन इव अभिरामा मनोहरा स्यात् भविष्यति तव कृष्णच्छायया श्वेतगंगायां जातः कृष्णयमुनायाः संगमः इव गंगा मनोहरं रूपं धारयिष्यति ॥ ५५ ॥

If, like a heavenly elephant with his forepart leaning against the sky, you think of drinking its crystal-clear-meandering water, she with your shadow swiftly moving *along the stream, will appear beautiful, as if she has been* united with the Yamuna at another place ( than Prayag ).

( O Cloud, if like a quarter-elephant bending low the front part of his body with the trunk to drink water of the Heavenly Ganges in the sky, you desire to drink in a slanting manner crystal clear water of the Ganges flowing by Kankhal, she, on account of your shadow falling in its swift current, will look charming, as if her confluence with

the Jamna has taken place not at Prayag but here on the bank at Kankhal. ) 55.

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृंगे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपंकोपमेयाम् ॥ ५६ ॥

इदानीं हिमाचलतीर्थप्राप्तिमाह । आसीनेति ।

हे मेघ, आसीनानां उपविष्टानां मृगाणां कस्तूरीमृगाणां नाभिगंधैः नाभिस्थितकस्तूरीगन्धैः परिमलैः सुरभितशिलं सुरभिताः वासिताः शिलाः दृषदः यस्य तं, तस्याः गंगायाः एव निश्चितं प्रभवं उत्पत्तिस्थानं, तुषारैः हिमजलकणवर्षैः गौरं शुभ्रं अचलं हिमाचलं प्राप्य आसाद्य अध्वश्रमविनयने मार्गपरिश्रमस्य विनयनं अपनोदनं विशेषेण संपूर्णतया नयनं निवृत्तिः येन सः तस्मिन् एतादृशे तस्य हिमाचलस्य शृंगे त्वं निषण्णः उपविष्टः सन् शुभ्रत्रिनयनवृषोत्खातपंकोपमेयां शुभ्रः श्वेतः त्रिनयनस्य शिवस्य यो वृषः वृषभः तेन उत्खातः उत्पाटितः पंकः कर्दमः तेन सह उपमेयां उपमानयोग्यां विशेषप्रकारां शोभां वक्ष्यसि लप्स्यसे ॥ ५६ ॥

Having reached the mountain, the source of that very river, white with snow and with its rocks fragrant on account of musk of the deer sitting there, you, seated on its peak to remove fatigue of the journey, will be endowed with beauty, comparable to the mud dug up by the white bull of the three-eyed Lord Shiva.

( O Cloud, reaching the Himalayas, whose rocks have been rendered fragrant by musk in the navel of the deer sitting thereon, which is the source of that river and which appears white on account of raining snow, you resting on its summit to ward off fatigue of your journey, will assume the beauty like the mud thrown up by Nandi–the white bull of God Shankar–with his horn. ) 56.

तं चेद्वायौ वहति सरलस्कंधसंघट्टजन्मा
बाधेतोल्काक्षपितचमरीवालभारो दवाग्निः ।

अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ॥ ५७ ॥

हे मेघ, वायौ वहति वेगेन वाति सति, सरलस्कन्धसंघट्टजन्मा सरला देवदारुवृक्षाः तेषां स्कधाः पुष्टशाखाः तासां संघट्टाः परस्परं घर्षणानि तैः जन्म उत्पत्तिर्यस्य सः। पुनः उल्काक्षपितचमरीवालभारः उल्काभिः उंबडियां इति लोके प्रसिद्धैर्ज्वलद्भिः शाखाप्रशाखाखडैः क्षपितः भस्मीकृतः चमरीणां बालभारः पुच्छभारः येन सः। एतादृशः दवाग्निः दावानलोग्नि हिमाचलं बाधेत पीडयेत् चेत् एनं दावानलं वारिधारासहस्रै सहस्रशः जलधाराभिः अलं सपूर्णतया शमयितुं अर्हसि योग्योसि। हि यस्मात् उत्तमाना संपदः सर्वप्रकाराः शक्तयः आपन्नार्तिप्रशमनफलाः आपन्नानां आश्रितानां अर्तिः तस्याः प्रशमनं स्फेटनं निवारणं तदेव फलं यासां ताः सन्ति भवन्ति ॥ ५७ ॥

If the conflagration caused by the friction of branches of pine trees when the wind blows, destroys by its flames the abundauce of Chamari's hair, it behoves you to extinguish it completely by thousands of your showers; for the riches of the best are verily for relieving the afflictions of the distressed

( O Cloud, if the wild fire, generated by thick branches of Devdar trees striking against one another when the wind blows violently, and burning with its sparks tufts of hair on tails of Chamari cows, proves calamitous to the Himalayas, you should thoroughly put it out by showering thousands of your rain streaks The wealth and the prowess of the best of persons are really for removal of suffering of theose, who come for shelter. ) 57.

ये संरम्भोत्पतनरभसाः स्वांगभंगाय तस्मिन्
मुक्ताध्वानं सपदि शरभा लंघयेयुर्भवन्तम्।
तान् कुर्वीथास्तुमुलकरकावृष्टिहासावकीर्णान्
केषां न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ५८ ॥

इदानीं शरभोपहासकथनव्याजेन हिमाचले निरुपद्रवविहारं कथयन्नाह। ये संरंभेति।

हे मेघ, तस्मिन् हिमाचले संरंभोत्पतनरभसाः संरंभेण तव गर्जनया जातव्याकुलतया त्वामुल्लंघ्याऽग्रे गमनेच्छया यत् उत्पतनं उल्लंघनं तस्मिन् लसत् यत् रभसः त्वरा औत्सुक्यं येषां ते। शरभाः ये लोके रोम्रू बहुवचने रोझडां इति संज्ञका महामृगभेदाः स्वांगभंगाय निजदेहास्थिखण्डनाय, मुक्ताध्वानं मुक्तं कृतं आध्वानं आसमन्तात् मुहुः ध्वानं गर्जितं येन तं भवन्तं सपदि तत्क्षणं समकालमेव लंघयेयुः तवोल्लंघनप्रयत्नं कुर्युः तर्हि तान् तान् शरभान् तुमुलकरकावृष्टिहासावकीर्णान् तुमुला विपुला या करकाणां करा इति लोके तेषां वृष्टिः तद्रूपं यत् हासं उपहसनं उपहास्य-हांसीपूर्वकं अवकीर्णान् व्याप्तान् विह्वलान् व्याकुलान् कुर्वीथाः कुरुष्व। केषां पुरुषाणां निष्फलारंभयत्नाः फलरहिताः आरंभाः तेषु ये यत्नाः प्रवृत्तयः फलहीनकर्मारंभप्रयत्नाः परिभवपदं पराजयरूपाः न स्युः अपि तु तादृशाः फलरहितकर्मणामारंभाः तेषु आरंभेषु च यत्नाः पराभवाय उपहास्याय एव सन्ति भवन्ति ॥ ५८ ॥

There you should scatter away, putting to ridicule by heavy showers of hail, the Sharabhas, which impetuous in their scared flight, may suddenly obstruct you, loudly thundering, to the breaking up of their own limbs. whose commencement of futile efforts will not become an object of derision. ?

( The pleasure in the Himalayas is now expressed through the mocking at Roz animals. O Cloud, on hearing your thunder in that Himalaya mountain, the roz animals–Sharabhas–will be greatly perplexed. Crossing your path, they will be fleeing in haste, the destruction of their own bodies. Laughing at that, you cover them with heavy showers of hails, so as to prevent them from running away. This will save them from possible injury to their limbs in efforts to escape. In other words, your terrible showers of hail will not allow those–animals to flee far away or to over–cross your path, thus–affording protection to their bodies. Their futile efforts to run away will be laughed at by you. Those persons who embark upon useless and unprofitable tasks have their efforts ended in failure. They become an object of ridicule of others. ) 58.

## EXPLANATION FOR THE VARIENT ·

Shri Mallinath and other commentators have interpreted the word मुक्ताध्वान for the cloud in this verse as 'one who has given up the path' this is not correct If the cloud keeps away or has kept itself away from the path, how can it shower hails on the Sharabhas ? Here the cloud aims to stop the Roz animals from fleeing away by raining hails upon them, also saving thereby their bodies from destruction

तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौलेः
शश्वत्सिद्धैरुपहितबलिं भक्तिनम्रः परीयाः ।
यस्मिन् दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
सङ्कल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५९ ॥

इदानीं हिमाचले विशेष कल्याणोपार्जन कथयन्नाह । तत्रेति ।

हे मेघ, तत्र हिमाचले अर्धेन्दुमौले' अर्धश्चासौ इन्दुश्च अर्धेन्दु' स मौलौ मुकुटे जटाया वा यस्य तस्य श्री शंभो चरणन्यास पादविन्यास पादाक शश्वत सतत सिद्धै उपहितबलि उपहित समर्पित धृत बलि नैवेद्यादिपूजा यस्य तम् दृषदि शिलाया व्यक्त स्पष्टतया प्रकट अवलोक्यते तद् दृष्ट्वा त्व भक्तिनम्र' भक्त्या प्रह्व' सन् परीयाः प्रदक्षिणीकुर्या ।

यस्मिन् चरणन्यासे पदाके दृष्टे सति श्रद्दधाना मनुष्या' उद्धूतपापा गतकल्मषा भवन्ति । पुन करणविगमात् ऊर्ध्वं करणाना इन्द्रियाणा विगम विराम' जीवनिर्गमनान्तर स्थिरगणपदप्राप्तये स्थिर अविनश्वर गणाना शिव गणाना भक्तगणाना यत्पदं स्थान परमब्रह्मरूप तस्य प्राप्तये सङ्कल्पन्ते समर्था' भवन्ति ॥ ५९ ॥

Humble with devotion, you should circumambulate the foot-print of Shiva,—bearing the crescent moon on His Head–imprinted there on the rock and to which offerings are always brought by the Siddhas On seeing it, those evincing faith and absolved from their sins will be destined to attain the eternal position of His attendants, after the body has perished

( O Cloud, foot prints of God Shankar, who bears the crescent moon on His head, are clearly visible on rocks in that Himalaya. Out for pilgrimage in aeroplanes, the Siddhas worship those footprints. You too should adore and circumambulate them.

Devout persons, on seeing those footmarks, get themselves absolved from sins, and repair to the abode of Everlasting–Parabrahma–Lord Shiva–after death. ) 59.

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः
संरक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।
निर्ह्रादी ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्
संगीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ६० ॥

इदानीं पदांकस्थाने शिवपरितोषकारणमुपदिशन्नाह । शब्दायन्ते इति । हे मेघ, अनिलैः पवनैः पूर्यमाणाः भ्रियमाणाः कीचकाः सच्छिद्रवंशाः मधुरं यथा भवति तथा शब्दायन्ते शब्द कुर्वन्ति । संरक्ताभिः भक्तिपरायणाभिः शंकरभक्तिप्रीतियुक्ताभिः किन्नरीभिः त्रिपुरविजयः त्रिपुरवधलक्षण गीतं गीयते । एषु सर्वेषु संगीतेषु मध्ये तदवसरे मुरजः इव मृदंग एव कन्दरेषु गुफासु निर्ह्रादी निर्ह्रादः प्रतिशब्दः पड्छदो इति लोके तद्युक्तः प्रतिशब्दवान् ते तव ध्वनिः यदि स्यात् भवेत् चेत तत्र पशुपतेः शंकरस्य ननु अवश्यं समग्रः संपूर्णः संगीतार्थः भावी भविष्यति । अर्थात् वंशानां शब्देषु, किन्नरीणां संगीते, मृदङ्गस्य अपूर्णता तव पड्छंदावता शब्देन पूरिता भविष्यति ॥ ६० ॥

The Bamboos, being filled with wind, produce a pleasant sound; Shiva's victory over Tripura is being sung by loving Kinnara ladies; if your thundering, resounding in the caves like a drum, be there, Shiva's paraphernalia for music will really be perfected.

( O Clond, the hollow bamboos filled with wind sound sweetly. The wives of the Kinnaras deeply devoted to Shiva, sing about the slaughter of Tripurasur at His hands. If your rumbling, echoing out from the caves like a drum, will be there along with this music, the comple-

ment for musical concert at the time of Shiva's worship will indeed be completed In other words, your thundering sound will wipe off the deficiency of a drum. )

The cloud wants to remove the great eagerness of those an imals to escape. Hence the adjective मुक्तध्वानं applied here to the cloud correctly means 'one who has done the roaring'. When the cloud thunders, the Roz animals become fear. stricken and prepare themselves for flight. If the cloud is afar, silent and changing the course, the Sharabhas will have no cause to run away.

तुमुलकरकावृष्टिपातावकीर्णान् is the text in most of the books published till now; but in the manuscript with us, it reads वृष्टिहासावकीर्णान्. In the commentary given below, also the word हास is accepted meaning उपहसन of ridicule. That is correct, *After the word वृष्टि, the use of the word* पात is redundant. The very word वृष्टि includes the fall of hails. The word वृष्टिपात conveys no proper sense. Hence 'covered by showers of hails' is the right meaning. 'Covered by the fall of showers hails' is a meaning not fitting in. Here the cloud is supposed to be mocking at the Roz animals, by covering with terrible shower of hails. To express–otherwise, make a fun of those animals–the Sharabhas–. by clouding them with showers of hails, thereby preventing them from running away hither and thither. Looking from this point of view, the reading वृष्टिपात does not seem correct. The word *वृष्टिहासा as found in this manuscript* 300 years old is apt and proper. 60.

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्
हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौंचरन्ध्रम् ।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्यामः पादो बलिनियमनाऽभ्युद्यतस्येव विष्णोः ॥६१॥

हे मेघ ! तान् तान् विशेषान् शंभुचरणन्यासादीन् दर्शनीयान् पूर्वोक्तान् अन्यान् वा तीर्थविशेषान् अतिक्रम्य उल्लङ्घ्य, प्रालेयाद्रेः हिमाचलस्य उपतटं तटं तलेटीति लोके तत्र विद्यमानं, हंसद्वारं हंसानां द्वारसदृशं अनेन द्वारेण हंसा मानससरोवरं यान्ति एतादृशं, भृगुपतियशोवर्त्म भृगुपतेः परशुरामस्य यशसां मार्गः चिह्नम्, पूर्वं परशुरामः शंभुकृपया प्राप्तशस्त्रविद्यया क्रौंचपर्वतशिखरस्य भेदं कृत्वा तत्र रन्ध्रात्मकं मार्गं चक्रे एतत्कथया तस्य यशसः मार्गः। यत् क्रौंचरन्ध्रमस्ति क्रौंचबिलं वर्तते तेन क्रौंचबिलमार्गेण तिर्यगायामशोभी प्रथमं तिर्यक् तिरश्चीनः पश्चात् आयामो विस्तारो दीर्घता तद्रूपः सन् शोभते इत्येवंशीलः त्वं क्रौञ्चरन्ध्रेण उदीचीं उत्तरां दिशं अनुसरेः यायाः। बलिनियमनाभ्युद्यतस्य बलेर्दैत्यस्य यन्नियमनं निग्रहणं तस्मिन् अभ्युद्यतस्य तदुद्यमपरस्य विष्णोः वामनावतारस्य विराड्रूपधरस्य विष्णोः तिर्यगायामशोभी पातालं प्रविशन् श्यामः पाद इव त्वं क्रौंचबिलं प्रविश्य उत्तरां दिशं गच्छ ॥ ६१ ॥

Going beyond those various beautiful spots on the slopes of the Himalaya, you, appearing beautiful on account of your oblique length and resembling the black foot of Vishnu, prepared to restrain Bali, should fly northwards by that Kraunch defile, by which swans proceed to the manas lake and which has contributed to Parashurama's glory.

( O cloud, having gone beyond Shankar's footsteps and various holy places, you will reach Kraunch defile on the slope of the Himalaya, a door as it were for swans to go to lake Maras and pointing the path of Parshuram's fame. Enter it somewhat obliquely, stretch yourself to come out and proceed thence northwards. Going into that Kraunch gap, you will appear as beautiful as the black leg of Vaman—Vishnu's incarnation—ready to restrain king Bali, placed at first obliquely and then extended. ) 61.

गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसंधेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः ।
शृंगोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिशमिव त्र्यम्बकस्याट्टहासः ॥ ६२ ॥

इदानीं कैलासमाभिसाह—गत्वेति ।

हे मेघ, त्व क्रौंचरन्ध्रान्निर्गत्य पुन ऊर्ध्वं गत्वा आकाश दशमुखभुजोच्छ्वासितप्रस्थसंधे दशमुख रावण तस्य भुजाभि उच्छ्वासिता शिथिलीकृता प्रस्थाना शृगाणा सन्धयो यस्य स तस्य। पुन त्रिदशवनितादर्पणस्य त्रिदशाना अमराणां ललना तासा मुकुररूपस्य, कैलासस्य, अतिथि प्राहुणक प्राहुण पाहुणो इति लोके स्या भवे । य कैलास कुमुदविशदै कैरवोज्ज्वलै शृङ्गैच्छ्रायै शृगाणा उन्नतिभि अ यतोन्नतशृङ्गै ख आकाश वितत्य व्याप्य स्थित । प्रतिदिश दिश दिश प्रति पूर्वपश्चिमादिदशदिक्षु मयत्रैव राशीभूत निचयस्थित. त्र्यम्बकस्य महेश्वरस्य अट्टहास इव कैलास स्थितोस्ति ॥ ६२ ॥

Going onwards, you be the guest of mount Kailas,—whose summit-joints have been loosened by Ravana's arms, which is a mirror for heavenly damsels, and which stands overspreading the sky with lofty lotus white peaks, as though it were the loud laughter of the three-eyed lord Shiva, accumulated in a heap all around everywhere

( O cloud, crossing that Kraunch gap and flying ahead in the sky, you should become the guest of mount Kailas, the joints of whose peaks have been rendered loose by Ravana's arms and which appears like a looking glass for the wives of gods That Kailas atands overspread in the sky with its high peaks, white as lotus flowers and looking as it were the loud laughter of Shiva, gathered around in all directions ) 62

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नांजनाभे
मद्यः कृत्तद्विरदरदनच्छेदगौरस्य तस्य ।
शोभामद्रेः स्तिमितनयनप्रेक्षणीया भवित्री-
ममन्यस्ते सति हलभृतो मेचके वाससीव ॥ ६३ ॥

इदानीं शोभाविशेषोत्पादनेन कैलासस्यापि जलदस्योपकारित्वमाह—
उत्पश्यामीति ।

हे मेघ, स्निग्धभिन्नांजनाभे स्निग्ध घृतादियुक्त भिन्न घृतादिना मर्दित यत् अञ्जनं कज्जल काजल आँजण इति लोके तत्सदृशा आभा शोभा कान्तिर्यस्य स तस्मिन्। एतादृशे त्वयि तटगते सति कैलासस्य शृङ्ग आरूढे सति मद्य कृत्त-

द्विरदरदनच्छेदगौरस्य सद्यस्तत्कालं कृत्तः छिन्नः यः द्विरदस्य गजस्य दन्तस्तस्य यः छेदः तद्वत् गौरस्य उज्ज्वलस्य तस्य अद्रेः पर्वतस्य कैलासस्य शोभां स्तिमितनयनप्रेक्षणीयां निश्चलनयनावलोकनीयां भवित्रीं भाविनीं उत्पश्यामि, स्थिरनयनैः दर्शनीया शोभा भविष्यतीति तर्कयामि। यथा श्वेतवर्णस्य हलभृतः बलभद्रस्य अंसन्यस्ते मेचके आकाशवर्णे नीले घेरो। वादली रंग इति लोके वाससी वस्त्रे स्कन्धयोरवधारिते स्कधारोपिते सति यादृशी स्थिरनयनप्रेक्षणीया शोभा भवति तद्वत्॥ ६३॥

When you resembling glossy and powdered collyrium, will be staying on its slopes, I imagine, the beauty of that mountain, white like a piece of *elephant's tusk just cut* off, will be worthy to be gazed at with steady eyes, like the dark scarf of Balaram placed on his shoulder

( O cloud, when you, appearing like black collyrium powdered in ghee, will ascend the peak of Kailas, I think, the grace of that mountain, white like a piece of ivory freshly cut, will be fit to be looked at with fixed eyes. Balbhadra, handsome white in body, becomes nice to see, when he puts on a dark-blue upper garment on his shoulder In the *same way, when you, black in colour,* will rest on that beautiful white Kailas, you will *assume* a beauty, charming to the eyes. ) 63.

तस्मिन् हित्वा भुजगवलयं शंभुना दत्तहस्ता
क्रीडाशैले यदि च विचरेत् पादचारेण गौरी।
भंगीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी॥ ६४॥

इदानीं उमामहेशयोः परितोषाय मेघ उपदिशन्नाह—तस्मिन्निति।

हे मेघ तस्मिन् क्रीडाशैले उमामहेशयोः क्रीडास्थानरूपे कैलासपर्वते भुजगवलयं सर्पकंकणं *परित्यज्य शंभुना शिवेन* दत्तहस्ता अर्पितहस्ता हस्तावलंबेन नीता गौरी पार्वती पादचारेण चरणचंक्रमेण यदि विचरेत् तदा तस्याः मणितटारोहणाय मणिमयः तटः विस्तृतः उपरिगतः प्रदेशः तत्र आरोहणं तदुपरि गमनंतस्मै भङ्गीभक्त्या भङ्गीनां पर्वणां पगथियां इति लोकेभक्त्या

विभागेन विरचितं वपुः शरीरं येन सः स्तंभितान्तर्जलौघः स्तंभितः स्थिरीकृतः निश्चलीकृतः अन्तर्मध्ये जलौघः नीरसमूहो येन सः, एतादृशः त्वं अग्रयायी पुरोगो भूत्वा सोपानत्व निश्रेणिकात्वं कुरु विधेहि ॥ ६४ ॥

If on that pleasure mount, Gauri, given hand by Shiva casting off his serpent-bracelet, moves about on foot, you go in front of her and form a flight of steps to ascend the jewelled slopes, with your mass of water controlled within and arranged into steps.

( O cloud, if on that mount Kailas, the pleasure-resort of Shonkar and Parvati, Parvati supported by Shankar's hand, leaving aside his serpent-bracelet, walks about on foot, you move ahead and form a flight of steps for them to ascend the mountain slopes bedecked with jewels At that time, conceal your watery content within and arrange *yourself into steps of proper dimensions.* ) 64.

तत्रावश्यं कुलिशवलयोद्‌घट्टनोद्‌गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यंत्रधारागृहत्वम् ।
तेभ्यो मोक्षस्तव यदि सखे घर्मलब्धस्य न स्यात्
क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भीपयेस्ताः ॥ ६५ ॥

इदानीं अमररमणीनां क्रीडाकारित्वे पयोदं प्रलोभयन् स्वकार्यसिद्ध्यर्थं अमतो गमनाय सूचयन् आह—तत्रेति ।

हे मेघ, तत्र कैलासोपरि सोपानत्वं प्राप्ते स्थाने सुरयुवतयः देवांगनाः कुलिशवलयोद्घट्टनोद्गीर्णतोयं कुलिशानां हीरकाणां वलयानि हस्तपरिहितानि कंकणानि तैः तेषां अग्रभागैः उद्घट्टनं खननं तेन उद्गीर्णं वान्तं निर्गतं तोयं जलं यस्य सः तं त्वां यन्त्रधारागृहत्वं नेष्यन्ति, यंत्रे कृत्रिमसाधनैः रचिताः धाराः तासां गृहत्वं नेष्यन्ति प्रापयिष्यन्ति । हे सखे घर्मलब्धस्य सोपानरूपबन्धनेन जातः घर्मः स एव लब्धः प्राप्तो येन सः तस्य ते तव ताभ्यः सुरांगनाभ्यः तव मोक्षः मुक्तिः मोचन यदि न स्यात् चेत्तदा क्रीडालोलाः केलिलंपटाः ताः सुरयुवतीः श्रवणपरुषैः कर्णकठोरैः गर्जितैः गर्जितध्वनिभिः भीषयेः त्रासयेः ॥ ६५ ॥

The celestial damsels will surely transform you there

in to a shower-bath, your water being thrown out by striking against their diamond-studded bangles. O friend, if you, obtained in the hot season, can have no escape from there, then frighten them, engaged in sport, by your thunders, harsh to hear.

( O cloud, cast in the form of steps on that mount Kailas, you will be scratched against by heavenly damsels with the sharp ends of their diamond-studded banbles. thoreby your body will appear like a machine, omitting forth various streaks of showers. In other words, they will get you discharged of water. O friend, if you, formed in to steps and oppressed by heat, be not allowed to escape by them, then inspire fear in them, engaged in aport, by your thunder, dreadful to the ears. ) 65.

हेमाम्भोजप्रसवसलिलं मानसस्यादादानः
कुर्वन् कामं क्षणमुखपटप्रीतिमैरावतस्य ।
धुन्वन् कल्पद्रुमकिसलयान्यंशुकानीव वातै-
र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ॥ ६६ ॥

इदानीं कैलासोपभोगप्रकारमाह—हेमाम्भोजेति ।

हे जलद मेघ, त्वं हेमांभोजप्रसवसलिलं हेम्नः स्वर्णस्य अंभोजानि कमलानि प्रसूते तत् प्रसवं सुवर्णकमलजनकं मानसस्य मानससरोवरस्य सलिलं जलं आददानः गृह्णन् , ऐरावतस्य इन्द्रद्विपस्य कामं स्वेच्छया क्षणमुखपटप्रीति क्षणं यावत् मुखपटेन ऐरावतगजस्य मुखे बद्धः पटः तेन सह प्रीतिं कुर्वन् लोके गजानां मुखेषु पटाः बध्यन्ते ते पटवटा इति प्रसिद्धाः तेन पटवटेन प्रीतिं कुर्वन् । पुनः कल्पद्रुमकिसलयानि कल्पवृक्षस्य कोमलानि कुंपळानि तत्र स्थितानि अंशुकानि इव अम्बराणि इव वातै. पवनैः धुन्वन् । इत्थंभूतैः ललितैः सुन्दरैः नानाचेष्टैः बहुविधचेष्टितैः विलासैः तं नगेन्द्रं निर्विशेत आश्रयेथाः ॥ ६६ ॥

Taking up the water of Lake Manas, *producing golden* lotuses; delighting at will the Airavat by supplying him for a moment a face-cloth; shaking off with your breezes the sprouts of the desire-yielding tree as if they were silken

garments with such like various beautiful movements, O cloud, you should find enjoyment in that Lord of the mountains

( The Megha is now advised to enjoy himself in Kailas O cloud, drinking the water of Lake Manas where golden lotuses spring, sporting at will with the embroidered cloth covering the face of Airavat, fanning the sprouts of the wishing tree like clothes suspended–with such and other sportive movements you delight yourself awhile on the Kailas ) 66

तस्योत्संगे प्रणयिन इव स्रस्तगंगादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ।
या वः काले वहति सलिलोद्गारमुच्चैर्विमानै-
र्मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ६७ ॥

अलकापुरी वर्णनम् १

इदानीं कैलासे अलकापुरीस्थान दर्शयन्नाह—तस्येति ।

हे मेघ, हे कामचारिन् स्वेच्छागतिक, प्रणयिन वल्लभस्य उत्संगे अंगना इव स्रस्तदुकूला गलितपट्टकूला युवती इव, तस्य कैलासस्य उत्संगे गंगा इव दुकूल श्वेतवस्त्र यस्या सा तां अलकां कुबेरनगरीं दृष्ट्वा उपलभ्य त्वं पुनः न ज्ञास्यसे इति न अपितु ज्ञास्यसे एव अर्थात् यस्या अलकाया किल मन्दाकिनी वहति तया वा अभिज्ञानभूतया अवश्य अलकानगरी त्वया ज्ञातु शक्या इति भाव । या अलकानगरी, मुक्ताजालग्रथित अलक कामिनी इव कामिनी स्वैरिणी गौरवर्णा स्त्री मुक्ताफलसमूहेन रचित गुम्फित अलकं कुटिल विशेषप्रकारेण रचित केशपाश यथा वहति धारयति तथा व युष्माकं काले वर्षासमये उच्चैर्विमाने उच्चै महोन्नता सप्तभूमिकप्रासादा तेषु तै सप्तभूमिकप्रासादै सलिलोद्गार सलिलस्य उद्गारा बिन्दव पतन्ति यस्मात सलिल उद्गिरन्ति इति तत् अभ्रवृन्द अभ्राणा मेघाना समूहं या अलकापुरी वहति धारयति 'विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनि' इति ॥ ६७ ॥

O you, wandering at will, it is not that you will not be indeed recognising Alaka, seeing her there on the mountain slope with her garment of Ganges slipped off, as

on a *lover's* lap Full of lofty *mansions*, it bears during your season, a mass of clouds shedding water, like a damsel having her braid ornamented with pearl strings

DESCRIPTION OF ALAKAPURI I

The cloud is now shown Alakapuri in Kailas

( O Cloud, wanderer at will, it will not be that you will not be knowing Kubera's Alaka after reaching it With her garment of Ganges slipped off, she will be appearing white and beautiful like a woman lying in her lover's lap with clothes disarranged You will be able to recognise that city for certain by help of the Ganges flowing by her side A woman, fair in colour, appears beautiful with a black braids of hair adorned wi h pearl strings Likewise, during your season—the *monsoon*—, the city of Alaka with lofty seven—stori d mansions, appears beautiful with dark cloud , showering drops of water ) 67

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
या नः काले प्रहतमुरजाः स्निग्धगंभीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ ६८ ॥

अलकापुरी वर्णनम् २

इदानीं अलकाप्रासादानां मेघस्य च समानतावर्णनपूर्वक अलका वर्णय-न्नाह—विद्युत्वन्तमिति ॥

हे मेघ, यत्र अलकानगर्यां प्रासादाः सप्तभूमिकानि धवलगृहाणि त्वां तुलयितुं धारयितुं अलं समर्थाः सन्ति । कीदृशा भवन्त कीदृशाः प्रासादाः द्वयो साम्येन नैस्तैस्तोलन शक्यतेऽरिति भाव । विद्युत्वन्त विद्युत् विद्यते यत्र स विद्युत्वान् तं विद्युत्कलत्रयुक्त सौदामिनीसहित तथा ललितवनिता ललिता विविधविलासयुक्ता सुन्दर्यो येषु ता प्रासादाः । सेन्द्रचाप बहुवर्णपूर्णेन्द्रचाप-संयुक्त त्वां, सचित्राः नानावर्णाकृतिचित्रैरलङ्कृता प्रासादाः । स्निग्धगभीरघोषा स्निग्ध वर्णमनोहर गभीर घोष शब्द यस्यासौ त त्वां, या अलकापुरी च-

युष्माक काले वर्षासमये प्रहतमुरजा आस्फालितमृदगा प्रासादा । अन्तस्तोयं मध्ये नलपूर्ण त्वा, मणिमयभुव अन्तर्नलप्रकाशयुक्तत्वेन महामूल्या मणय 'पाणिदार" विविधरत्नानि तैर्नटिता भू येषा ते प्रासादा । अर्थात् प्रासादाना भूपृष्ठ जलगर्भितमहामूल्यरत्नै नटित, रत्नघटितशिलादिकाभिराच्छादितमस्तीति । यथा मेघ जलगर्भितस्तथा प्रासादा अपि नलगर्भितरत्ननटितभूपृष्ठा इति । तुङ्ग महान्त उन्नत त्वा, अभ्रलिहाग्रा अभ्र आकाश लिहन्तीति अग्राणि उपरि भूमिकानि विमानानि येषा ते प्रासादा । इत्थ तैस्तै उपयुक्तै विशेषै भिन्नभिन्नप्रकारै तव च साम्येन ते प्रासादा त्वा तुलयितु अल पूर्णतया समर्था सन्ति ॥ ६८ ॥

( Alaka ) Where the mansions with winsome women, pictures, resonant drums, floor inlaid with gems and cloud kissing summits can well stand in comparison with you, endowed with lightning and rainbow, possessed of sweet deep rumbling during the rains, with water inside and lofty

## DESCRIPTION OF ALAKAPURI 2

( comparison between the cloud and the palaces in Alakapuri O Cloud, in that city of Alakapuri, there are seven–storied palaces, well able to be compared with you or to bear you Now hear in what respects, they can compete with you

Just as you are accompanied by your wife, the lightning, those palaces have beautiful ladies sporting in them You possess a rainbow of red, yellow, green and blue colour Likewise they have fine pictures, drawn in beautiful colours and designs You have a gentle and sweet rumbling sound Similarly, those palaces resound with the sounds of drums in your season—the rains If you are filled with water inside, the floors of those mansions are set with diamonds, rubies, pearls, sapphires, emeralds and other jewels You appear to be high, but the summits of those palaces are equally lofty and seem to be touching

the sky. Palaces in Alakapuri can thus well be compared with you They can bear you nicely. ) 68

शष्पश्यामा दिनकरहयस्पर्धिनो यत्र वाहाः
शैलोदग्रास्त्वमिव करिणो वृष्टिमन्तः प्रभेदात् ।
योधाग्रण्यः प्रतिदिशमुखं संयुगे तस्थिवांसः
प्रत्यादिष्टाभरणरुचयश्चन्द्रहासव्रणांकैः ॥ ६९ ॥

अलकापुरी वर्णनम् ३

हे मेघ, यत्र अलकायां अश्वाः शष्पश्यामाः शष्पं गाढहरितवर्णं ईषच्छ्यामं हरितं तृणं तत्सदृशाः अश्वाः दिनकरहयस्पर्धिनः दिनकरस्य सूर्यस्य ये हयास्तुरंगास्तान्स्पर्धन्ते इत्येवशीलाः सन्ति । यस्या अलकायां शैलोदग्राः पर्वतोन्नता करिणः गजाः त्वमिव त्वं यथा वृष्टिं करोषि तद्वत् प्रभेदात् मद-क्षरणात् वृष्टिमन्तः मदजलस्राविणः सन्ति । यस्यां अलकायां च संयुगे संग्रामे सर्वकालं प्रतिदिशमुख प्रत्येकदिशायां दिशं दिशं प्रति तस्थिवांसः सज्जाः चंद्रहासव्रणांकैः चंद्रहासः विशेषप्रकारः असिः तस्य व्रणानां अंकैः युद्धेन जातैः चिह्नैः प्रत्यादिष्टाभरणरुचयः प्रत्यादिष्टा निराकृता आभरणानां रुचयः यैः एता-दृशाः योधाग्रण्यः योधानां अग्रण्यः सुभटाः सन्ति ॥ ६९ ॥

( Alaka ) Where deep-green horses can vie with the horses of the sun; where elephants as high as mountains are possesed of showers as you are on account of their rut; where the best of warriors stay firm in battle in every direction with marks of wounds by scimitarc setting at naught the brilliance of the ornaments.

## DESCRIPTION OF ALAKAPURI 3.

( O Cloud, the horses in Alakapuri, green-black in colour like tender grass, can compete with the horses of the sun, You are showering the rain Likewise, elephants in Alakapuri, as high as a mountain, shower their water-like rut. There are also in Alaka the best of warriors, standing ready for fight at any time in all directions The marks of wounds caused by scimitars ( chandrahas ) on

their bodies during the battle leave them no desire for wearing ornaments' ) 69.

आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तै-
र्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ।
नाप्यन्यत्र प्रणयकलहाद् विप्रयोगोपपत्ति-
र्वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥ ७० ॥

अलकापुरी वर्णनम् ४

हे मेघ, यस्यां अलकायां वित्तेशानां यक्षाणां गुह्यकानां आनन्दोत्थ हर्षोत्पन्नं नेत्रजलमस्ति। न पुनरन्यैर्निमित्तैः इष्टवियोगादिभि. कारणैर्जनितं नयनेषु अश्रु चागच्छति।

पुन. यस्यां च इष्टसंयोगसाध्यात् इष्टस्य संयोगेन साध्यात् इष्टानां प्रियाणां प्रियाङ्गनानां च संयोगेन शाम्यते सः तस्मात् कुसुमशरजान् कन्दर्पोद्भूतात्तापात् अन्यस्तापो मृत्युवियोगव्याधिदरिद्रतादिजनितो नास्ति । पुन यस्या अलकायां स्त्रीपुंसां प्रणयकलहादन्यत्र प्रीतिकलहं विना अन्यत्र अन्यकारणै. विप्रयोगो नास्ति ।

पुनः यस्या अलकायां खलु निश्चयेन यौवनादन्यत वयो नास्ति अवस्था न विद्यते । तु पुनर्वृद्धलक्षणं वयो नास्ति ॥ ७० ॥

( Alaka ) Where tears from eyes flow through delight and not for any other reason; where there is no other fever except that caused by love pangs and curable by union with the beloved; where there is no other incidence of separation except one due to quarrel in love and where the Lords of wealth have no other age but the youth

DESCRIPTION OF ALAKAPURI 4

( O Cloud, the Yakshas or the Guhyakas living in Alakapuri and their wives always get tears of joy. They never have tears for any other cause as grief, sorrow or separation.

They are never afflicted with death, separation, disease, poverty etc. The only affliction they have is that from

the God of love, which can be cured by union with the beloved.

There is no other kind of quarrel or bickering there except that arising from love-sports.

Those Yakshas in Alakapuri also enjoy no other age but the youth. They never get old 70.

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमरचनान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं
त्वद्गंभीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ७१ ॥

अलकापुरी वर्णनम् ५

हे मेघ, यस्यां अलकायां उत्तमस्त्रीसहायाः उत्तमाः रूपगुणसहिताः स्त्रियः नार्य एव सहायाः येषां ते वरसुंदरीसहिताः यक्षाः गुह्यकाः, सितमणिमयानि सितानि उज्ज्वलानि प्रभायुक्तानि मणयः रत्नानि येषु तानि रत्नजटितानि। ज्योतिश्छायाकुसुमरचनानि ज्योतिषां नक्षत्राणां छायाः प्रतिबिम्बानि तान्येव कुसुमरचनानि येषु तानि एतादृशानि हर्म्यस्थलानि एत्य हर्म्याणां उपरिभागे आकाशिकायां गत्वा। त्वद्गम्भीरध्वनिषु त्वत्सदृशः गंभीरः सुभगः ध्वनिः येषु तेषु पुष्करेषु मृदंगेषु शनकैः मंदं आहतेषु आस्फालितेषु सत्सु कल्पवृक्षप्रसूतं कल्पवृक्षोत्पन्नं, रतिफलं रतिः संभोग एव फलं यस्य तत् एतादृशं मधु स्त्रीसंगे आनन्ददायिनीं मदिरां आसेवन्ते उपभुञ्जन्ते पिबन्ति ॥ ७१ ॥

( Alaka ) Where the Yakshas, accompanied by beautiful women, having repaired to mansions, studded with crystals and reflecting the images of stars resembling flowers, enjoy the Ratiphala wine, yielded by the wish fulfilling tree; while drums, sounding deeply like your thunder, are being beaten harmoniously.

DESCRIPTION OF ALAKAPURI 5

( O Cloud, in that city of Alakapuri, the Yakshas having gone up the terraces of their palaces inlaid with saphires and appearing as if interwoven with flowers on account

of the reflected images of stars in them drink in the company of beautiful women, the wine coming forth from the wishing tree and contributing to pleasure in sexual union; while drums deep in sound like your thunder are being gently beaten. ) 71.

गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविस्रंसिभिश्च ।
मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥ ७२ ॥

## अलकापुरी वर्णनम् ६

हे मेघ यत्र यस्यां अलकायां कामिनीनां शृंगारिणीनां स्त्रीणां गत्युत्कंपात् गत्या शीघ्रगमनेन गमनजनितः उत्कंपः चलनं तस्मात्, अलकपतितैः अलकेभ्यः कुटिलकेशपाशेभ्यः पतितैः मन्दारपुष्पैः कल्पवृक्षकुसुमैः, पत्रच्छेदैः नागवल्लीशकलैः, कर्णविस्रंसिभिः कर्णपरिभ्रष्टैः वर्णेभ्यः पतितैः कनककमलैः, स्तनपरिसरच्छिन्नसूत्रैः स्तनपरिसरेण कुचप्रदेशविस्तारेण विपुलपुष्टस्तनास्फालनेन छिन्नानि सूत्राणि दोराः येषां तैः मुक्ताजालैः मौक्तिककलापैः मुक्तागुंफितैः हारैः इत्यादिभिः सवितुः सूर्यस्य उदये नैशः निशायां भवः मार्गः सूच्यते ॥ ७२ ॥

( Alaka ) Where the path gone over by young women at night is shown at sunrise by Mandar flowers dropped from the tresses, by pieces of patra creepers and golden lotuses slipped away from ears and by necklaces and garlands with their strings cut off by contact with their breasts, on account of their agitated gait.

## DESCRIPTION OF ALAKA 6.

( O Cloud, in that Alaka, the path traversed by love lorn ladies at night is pointed out at sun-rise by flowers of the Kalpa vruksha tree fallen off from the braid, by pieces of betel leaf dropped from the mouth, by golden lotuses come down from ears, and by wreaths and necklaces

with their threads broken by expansive breasts, owing to swift bodily movements while walking. ) 72.

नीवीबन्धोच्छ्वसितशिथिलं यत्र यक्षांगनानां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुंगानभिमुखमपि प्राप्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरितश्चूर्णमुष्टिः ॥ ७३ ॥

## अलकापुरी वर्णनम् ७

उपर्युक्तैः अन्यैर्वक्ष्यमाणैः चिह्नैः अलकां ज्ञास्यस्येव इति वर्णयन्नमे आह—नीवीति ।

हे मेघ, यत्र अलकायां ह्रीमूढानां लज्जाव्याकुलितानां यक्षांगनानां गुह्यकस्त्रीणां, नीवीबंधः नीवीशाटकपट्टिका तस्याः बंधस्य उच्छ्वसितं शिथिलीभवनं तेन शिथिलं श्लथीभूतं क्षौमं दुकूलं अनिभृतकरेषु चंचलहस्तेषु चपलक्षणेषु प्रियेषु आक्षिपत्सु रागात् हास्येन आकर्षत्सु सत्सु अर्चिस्तुगान् अर्चिषा विशेषप्रकाशमानान् महाद्युतीन् रत्नप्रदीपान् अभिमुखं सम्मुख प्राप्यापि दीपशान्तये चूर्णमुष्टिः अबिलादिसुगंधिद्रव्यस्य विफलप्रेरितः मुष्टिः निष्फलप्रक्षिप्तः भवति रत्नप्रदीपानां प्रकाशानां अविनश्वरत्वेन अबिलादिप्रक्षेपेणापि दीपनिर्वाणः दीपशान्तिर्न भवति अन्धकारं न व्याप्नोति ॥ ७३ ॥

(Alaka) Where the handful of powder thrown by Yaksha *women overcome* with shame, and with their silken garment, loosened on account of the untying of the knot, being snatched away through love by lovers with swift hands, is rendered futile, though it reaches powerful jewel-lamps with high flame.

## DESCRIPTION OF ALAKA 7.

(O Cloud, in that Alakapuri, when the silken garment, loosened by slackening the knot, of Yaksha women, overpowered by shame, is being *taken* away by sporting lovers with quick hands, those women throw handfuls of fragrant powder on lamps to extinguish them and to cause darkness; but their efforts prove futile, as they are not the

*lamps burning with oil* They are in reality the jewel lamps, with rays of light emerging from them Hence their light could not be put out by throwing on them handfuls of fragrant powder ) 73

हस्ते लीलाकमलमलकं बालकुन्दानुविद्धं
नीता रोध्रप्रसवरजसा पाण्डुतामाननश्रीः ।
चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥ ७४ ॥

## अलकापुरी वर्णनम् ८

पुन अलकाया परिचय निरूपयन्नाह—हस्त इति ।

हे मेघ यत्र यस्या अलकाया वधूना नवपरिणीतयुवतीना हस्ते लीला-कमल लीलार्थं क्रीडार्थं धारित कमल वर्तते ।

बालकुन्दानुविद्ध बालकुन्दा अविकसिता डोलरकलिका तै अनुविद्ध व्याप्त ग्रथित डोलरकलिकागुम्फन कलिकाभूषण तालुप्रदेशवर्तिनि साधित-केशमध्यभागे वधूना अलक केशपु वर्तते ।

रोध्रप्रसवरजसा रोध्राणा लोद्रवृक्षाणा प्रसवा पुष्पाणि तेषा रज पुष्प-पराग तेन तल्लेपेन वधूना आननश्री मुखशोभा पाण्डुता गौरता नीता प्राप्ता वर्तते ।

यस्या पुर्यां वधूना चूडापाशे धम्मिल्ले नवकुरवक वर्तते । कर्णे च चारु सुन्दर शिरीषपुष्प वर्तते । सीमन्ते मैंथो इति लोक मस्तकस्य मध्ये केशवीथ्या त्वदुपगमज त्वत् तव उपगम आगम वर्षाकाल तस्मिन् समये जायते इति त्वदागमनोत्पन्न नीप कदम्बपुष्प वर्तते ॥ ७४ ॥

( Alaka ) Where women bear a sporting lotus in hand, their hair are wreathed with fresh Kunda flowers, the beauty of their face has been rendered pale white by pollen of lodhra flowers, they bear a fresh Kuravak flower on their hair knot, a fine shirish flower in the ear and a Kadamb flower, sprung at your advent, at the parting of the hair

## DESCRIPTION OF ALAKAPURI 8

( O Cloud, in Alakapuri, young women, recently married, dangle in their hands a lotus flower to sport. Their tresses of hair are adorned with unopened buds of Kunda flowers They besmear fine fragrant powder of the pollen of lodhra flowers to whiten their faces They tastefully decorate their hair-knot by fresh Kuravak flowers and ears with soft and silky shirish flowers At the parting of the hair, they bear Kadamba flowers, which bloom at *your approach the rainy season* ) 74

यस्यां मत्तभ्रमरमुखराः पादपा नित्यपुष्पा
हंसश्रेणीरचितरशना नित्यपद्मा नलिन्यः ।
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापा
नित्यज्योत्स्नाप्रतिहततमोवृत्तिरम्याः प्रदोषाः ॥ ७५ ॥

## अलकापुरी वर्णनम् ९

हे मेघ, त्वं तां अलकां एभिश्चिह्नैरपि ज्ञास्यसे इत्य ।

यस्या अलकाया मत्तभ्रमरमुखरा' पुष्पद्रवे मत्ता' ये भ्रमरा मधुकराः तै. मुखरा गुञ्जायमाना पादपा नित्यपुष्पा सदापुष्पिता सन्ति ।

यस्या अलकाया हसश्रेणीरचितरशना' हसाना श्रेण्या पङ्क्त्या रचिताः स्थापिता रशना' मेखलाः यासां ता नलिन्य. पद्मिन्य. सरोवरिका' नित्यपद्मा' नित्य सर्वकाल सर्वर्तुषु कमलपुष्पयुक्ता सन्ति ।

यस्यां अलकाया केकोत्कठा' केकाशब्देन ऊर्ध्वीकृता कठा. यैस्ते भवनशिखिन' पालिता गृहमयूरा नित्यभास्वत्कलापा' नित्य सतत सर्वकाल भास्वन्तः सुशोभिता रमणीया कलापाः कला' येषां ते सन्ति ।

यस्यां प्रदोषा' रात्रय नित्यज्योत्स्नाप्रतिहततमोवृत्तिरम्या. सन्ति । साक्षात् शम्भो' तत्र नित्यनिवासात् तज्जटायां स्थितशशिना नित्यं सतत प्रकाशमाना या ज्योत्स्ना चन्द्रकान्तिः तया प्रतिहता दूरीकृता अवरुद्धा तमसा अन्धकाराणां आवृत्ति पुनरागमन तेन रमणीयाः वर्तन्ते ॥ ७५ ॥

( Alaka ) Where the trees, resonant with the humming of intoxicated bees, bear flowers for ever; where lotus

creepers, having as their girdles the rows of swans, always possess blooming lotuses; where domestic peacocks, with necks uplifted for cry, have over shining lumages and where the nights, rendered pleasant by dispelling darkness, are for over flood-lit.

## DESCRIPTION OF ALAKAPURI 9.

( O Cloud; you can recognise that Alakapuri from signs as below :—The trees, resounding with the sound of bees intoxicated by flower-juice, bear blowers here the whole year round. Her ponds, bearing lotus flowers for all the months, have rows of swans sitting on the banks and appearing beautiful like a white girdle. The domestic peacocks in Alakapuri, emitting shrill notes, always shine with their brilliant plumage. As God Shankar himself lives in Alaka, her nights are for ever illumined by the bright light of the moon in Shiva's crest. Darkness is to be soon nowhere in Alaka. ) 75.

अक्षीणान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै-
रुद्गायद्भिर्धनपतियशः किन्नरैर्यत्र सार्धम् ।
विभ्राजाख्यं विबुधवनितावारमुख्यासहाया
बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति ॥ ७६ ॥

## अलकापुरी वर्णनम् १०

हे मेघ यत्र यस्यां अलकायां, विबुधवनितावारमुख्यासहायाः विबुधवनिताः देवस्त्रीरूपाः याः वारमुख्याः वारांगनाः कलाकुशलांगनाः ताः सहायाः येषां ते ।

अक्षीणान्तर्भवननिधयः अक्षीणाः क्षयरहिताः अंतर्भवने गृहाभ्यन्तरे तोपाख्याना इति लोके तत्र निधयः स्वर्णरत्नादीनां भण्डाराः येषां ते ।

एतादृशाः कामिनः शृंगाररसिका दक्षाः रक्तकण्ठैः मधुरस्वरैः धनपतियशः कुबेरकीर्तिद्योतकानि संगीतानि उद्गायद्भिः उत्तमप्रकारेण उच्चस्वरैः गायमानैः किन्नरैः सार्धं बद्धालापाः बद्धाः सम्प्रवेशिताः साधिताः रागाणां आलापाः यैस्ते

सन्तः वहिरूपवनं अलकापुर्याः वहिर्भागे स्थितं विभ्राजाख्यं विभ्राजनामकं उद्यानं प्रत्यहं अनुदिनं निर्विशन्ति प्रविशन्ति ॥ ७६ ॥

( Alaka ) where lovers, *possessing* inexhaustible treasures in their abodes, accompanied by celestial damsels as harlots and singing in harmony with the Kinnaras melodiously chanting Kubera's glory, everyday enter *for enjoyment* the outer garden called Vibhraj.

DESCRIPTION OF ALAKA. 10.

( O Cloud, celestial damsels afford pleasure to males in Alakapuri by acting as harlots, well-versed in fine arts. The treasures of wealth of the Yakshas in Alaka always remain filled with gold and jewels They never get exhausted inspite of lavish use. Such erotic Yakshas, singing in harmoney with the Kinnaras, sweetly reciting Kubera's glory, enter and *enjoy in the garden called Vibhraj, situated* outside Alaka. ) 76.

यत्रानीताः सततगतिना यद्विमानाग्रभूमी-
रालेख्यानां स्वजलकणिकादोषमुत्पाद्य सद्यः ।
शंकास्पृष्टा इव जलमुचस्त्वादृशा यत्र जालै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ७७ ॥

अलकापुरी-वर्णनं ११

हे मेघ, यत्र यस्यां अलकायां सततगतिना पवनेन यत् यस्याः अलकायाः विमानानि सप्तभूमिकानि हर्म्याणि तेषां अग्रभूमयः अंतिमगृहाणि ताः आनीताः अंतःप्रापिताः त्वादृशाः त्वत्सदृशाः जलमुचः मेघाः आलेख्यानां चित्राणां स्वजलकणिकादोषं उत्पाद्य स्वजलानां बिन्दुभिः विकृतिं विधाय सद्यः शंकास्पृष्टा इव भयचकिता इव धूमोद्गारानुकृतिनिपुणाः धूमस्य उद्गारः निर्गमनं तस्य अनुकृतिः अनुकरणं तत्करणे निपुणाः कुशलाः अत एव जर्जराः पृथक् पृथक् भूताः जालैः जालिकाभिः गवाक्षविवरैः निष्पतन्ति बहिः निःसरन्ति ॥ ७७ ॥

( Alaka ) where clouds like you, brought to the terraces of seven-storied *mansions* by ever-moving wind, having

spoiled the pictures straightway with their drops of water, and being scarred as it were, get out through the windows, skilled as they are in imitating the smoke-issue and reduced to particles.

DESCRIPTION OF ALAKA-11

( O cloud, to the terraces of high mansions in Alaka, clouds like you are propelled by ever blowing wind. Entering them, they at once spoil the bright hues of pictures hanging inside. Filled with fear thereat, those clouds, adept in assuming the form of smoke, scatter themselves and escape through the windows. ) 77.

मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि-
मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥ ७८ ॥

अलकापुरी-वर्णनं १२

हे मेघ, मंदाकिन्याः गगायाः सलिलशिशिरैः जलेन तोयतुषारेण शीतलैः मरुद्भिः पवनैः सेव्यमाना, अनुतटरुहां तीरसमीपोद्गतानां मन्दाराणां सुरतरूणां कल्पद्रुमाणां छायया वारितोष्णाः निवारिताः उष्णाः आतपाः सूर्यतापाः याभिस्ताः, अमरप्रार्थिताः देवैर्याचिताः कन्याः यक्षकुमारिकाः कनकसिकतामुष्टिनिक्षेपगूढैः कनकस्य स्वर्णस्य सिकता वालुका रेतिः तस्याः मुष्टिः तत्र निक्षेपः न्यासः तेन गूढैः गुप्तैः अन्वेष्टव्यैः कस्या मुष्टौ को मणिः स्वर्णवालुकान्तर्हितोऽस्तीति ज्ञातव्यैः मणिभिः रत्नैः संक्रीडन्ते रमन्ते ॥ ७८ ॥

( Alaka ) where girls, longed for by gods served by breezes cooled by waters of the Ganges and with the sun's heat warded off by the shade of Mandar trees growing along the banks, sport with jewels, concealed by being thrown in the golden sand with handfuls and which have to be searched for.

DESCRIPTION OF ALAKA 12.

( O cloud, young Yaksha girls, enjoying the breezes

rendered cool by waters of the Ganges, freed from the heat of the sun by the shade of the Mandar trees growing on her banks and courted by gods, play with gems concealed in handfuls in golden sand. In other words, the sand of the Ganges flowing by Alaka contains gold. Taking in to their hands and concealing various gems in it, those girls play with one another by asking to identify the jewel in their fists ) 78

यत्र स्त्रीणां प्रियतमभुजालिंगितोच्छ्वासितानां-
मंगग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैः प्रेरिताश्चन्द्रपादै-
र्व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥ ७९ ॥

अलकापुरी-वर्णनं १३

हे मेघ, यत्र यस्यां अलकायां तन्तुजालावलंबा तंतुजालाः शलाकायुक्त-जालिकाः तासु अवलंबः आधारो येषां ते। पुनः त्वत्संरोधापगमविशदैः त्वत् तव संरोधः आवरणं तस्य अपगमः अभावः तेन निर्मलैः चंद्रपादैः चंद्रकिरणैः प्रेरिताः नोदिताः अत एव स्फुटजललवस्यन्दिनः स्फुटाश्च जलकणाश्च तान् स्यन्दन्ति वर्षंतीति वर्षंशीलाः चन्द्रकान्ताः चन्द्रकान्तमणयः प्रियतमभुजालिङ्गितोच्छ्वासितानां प्रियतमानां भर्तॄणां यानि भुजाभिः आलिंगितानि तैः उच्छ्वासिताः श्वासोच्छ्वासगतिं प्राप्ताः विकलिताः तासां स्त्रीणां सुरतजनितां निधुवनोत्पादितां अंगग्लानिं शरीरस्य खेदं श्रम व्यालुम्पन्ति अपनयंति ॥ ७९ ॥

( Alaka ) Where the moon-stones, hanging by strings from the ceiling, showering drops of water on account of moon-beams bright due to the removal of your obstruction, dispel the bodily langour, brought on by sensual pleasures in women, breathing deeply owing to the embraces by the arms of their lovers.

## DESCRIPTION OF ALAKA 13

( O cloud, the Chandrakant jewels studded in the lattice ceilings in Alaka, sprinkling drops of water owing to moon-rays falling clear on them after your obstruction has been

removed, take away the bodily fatigue, caused by sensual pleasure in women, breathing high and confused by the embraces of the arms of their lovers ) 79

मत्वा देवं धनपतिसखं यत्र साक्षाद् वसन्त
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम् ।
सभ्रूभंगं प्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरव सिद्धः ॥ ८० ॥

अलकापुरी-वर्णनं १४

हे मेघ, यत्र यस्या अलकाया धनपतिसख कुबेरस्य मित्र अलकायां साक्षाद् वसन्त मूर्तिमन्त निवसन्त देव महेश्वर मत्वा तस्य भयान् भीत्या कन्दर्प प्राय बाहुल्येन षट्पदज्य भ्रमरश्रेणिप्रत्यच धनु न वहति न धारयति।
ननु यदि मन्मथ चाप तत्र न वहति तदा कथ तत्रत्याना मिथुनाना परस्पर प्रीतिरुत्पद्यते इति चेत्तत्राह—
सभ्रूभग भ्रुकुटिविलासयुक्त यथा स्यात्तथा प्रहितनयनै प्रेषितानि प्रेरितानि नयनानि नेत्राणि येषु तै अमोघै सफलै चतुरललनाविभ्रमै कामक्रीडाचतुरा या कामिन्य तासा विलासैरेव तस्य मन्मथस्य कन्दर्पस्य कामिलक्ष्येषु कामि चेष्येषु योऽसौ आरम्भ प्रहरणप्रसिद्ध सिद्ध निष्पन्न सफल वर्तते ॥ ८० ॥

( Alaka ) Where knowing that God Shiva, the friend of the Lord of Wealth resides in person, Cupid does not generally wield his bee–stringed bow through fear His task is accomplished by sports of clevar women alone with glances flown frowningly and infallible against their love–targets

DISCRIPTION OF ALAKA 14

( O Cloud, out of fear of Lord Shiva, the friend of Kubera, living in person in Alaka, the God of Love does not generally wield his bee–stringed arrow here If Cupid has not his play, how are then young men and women attracted towards one another ? To remove this doubt, it has been said that love has its origin here in sports of clever *women, whose glances cast frowningly* are *unfailing against* their love–targets. ) 80

वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान् ।
लाक्षारागं चरणकमलन्यासयोग्यं च यस्या-
मेकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥ ८१ ॥

अलकापुरी-वर्णनं १५

हे मेघ, यस्या अलकाया एक कल्पवृक्ष सकल समस्त अबलामण्डन सूते ललनालङ्करण जनयति । किं किं नाम ।

चित्र नानाप्रकार नानावर्ण वास अपेक्षितवस्त्राणि सूते जनयति ।

पुन । नयनयोर्विभ्रमादेशदक्ष लोचनयो विभ्रमाणा हावभावादिविलासाना आदेश प्रकटीकरण तत्र दक्ष चतुर मधु विविधप्रकारा ससारसुखप्रदा मदिरा सूते ।

पुन । किसलयै मद किसलकै कुपलै कलिकाभि सह पुष्पोद्भेद पुष्पाणा उद्भेद प्राकट्य सूते जनयति ।

पुन । भूषणाना विकल्पान् आभूषणाना अलङ्कारवस्तूना हार-केयूर-कुडल-मुद्रिका-कङ्कण-कटिमेखलादीन् विशेषान् जनयति ।

पुन । चरणकमलन्यासयोग्य पादपद्मारोपणोचित लाक्षाराग रक्तनीलादि रङ्गाणा अलक्तकादीना राग विविधरङ्ग च सूते जनयति । येन विविधरङ्गाणा विन्दुभि कृतान्यालेख्यानि पादसौन्दर्यरचनानि कन्या युवतयश्च कुर्वंति ॥८१॥

( Alaka ) where all paraphernalia which adorn the fair sex are produced by the wish-yielding Tree alone—a garment of variegated hues, wine skilled in teaching sportive glances to the eyes, blooming of flowers along with sprouts a variety of ornaments and red lac fit to be applied to lotus-like feet.

## DESCRIPTION OF ALAKA 15

( O Cloud, all things which go to adorn women are supplied in this city of Alaka by the wish-Fulfilling tree alone. It provides for them the best of cotton and silken garments with different colours It supplies them wine contributing to happiness and capable to instruct them in graceful movement of the eyes. It brings about flowers with

all kinds of ornaments such as necklaces, anklets, rings, bangles, bracelets etc. It also gives beautiful red lac, with which unmarried girls and young wives in Alaka can embellish their lotus-like feet. ) 81.

तत्रागारं धनपतिगृहादुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।
यस्योद्याने कृतकतनयः कान्तया वर्धितो मे
हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥ ८२ ॥

यक्षगृह-वर्णनं १

इदानीं अलकायां अभिज्ञानपूर्वकं आत्मीयं धवलगृहं निदर्शयन्नाह—तत्रागारेति ।

हे मेघ, तत्र तस्यां अलकायां अस्मदीयं अस्माकं इदं आगारं गृहं धनपतिगृहात् कुबेरस्य गृहात् उत्तरेण उत्तरस्यां दिशि राजभवनात् अदूरेण वर्तते ।

कथंभूतं गृहं इत्याह—सुरपतिधनुश्चारुणा इन्द्रचापाकाररचनामनोहरेण तोरणेन नानावर्णरत्नखचितेन दूराल्लक्ष्यं विप्रकृष्टात् अवसेयं दूरत एवानेन चिह्नेन अभिज्ञातुं शक्यम् ।

पुनः अभिज्ञानान्तरमाह—यस्य गृहस्य उद्याने उपवने मम कान्तया प्रिया वर्धितः पालितः, कृतकतनयः कृत्रिमः पुत्रीकृतः हस्तप्राप्यस्तबकनमितः हस्ताभ्यां प्राप्यैः ग्राह्यैः स्तबकैः पुष्पगुच्छैः नमितः नम्रीभूतः बालमन्दारवृक्षः लघुकल्पवृक्षः वर्तते ॥ ८२ ॥

There, to the north of Kubera's mansion, is situated our house, recognisable from afar by an archway, beautiful as Indra's rain-bow; in whose garden there is brought up by my wife, like an adopted son, a young mandar tree, weighed down by clusters of flowers, accessible by hand

DESCRIPTION OF THE YAKSHA'S HOUSE :-1

( O cloud, in that Alakapuri our house is situated near Raj Bhavan, to the north of Kubera's palace Hear what it is like. You can recognise it from a distance by means of archways, intertwined with jewels, charming and variegated

like Indra's rain-bow. In the garden of this house, there has been nurtured by my wife, like her son, a tender Kalpa-Vriksba tree, bent low by clusters of flowers, within easy reach by hand. ) 82.

वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना विकचकमलैः स्निग्धवैडूर्यनालैः ।
यस्यास्तोये कृतवसतयो मानसं संनिकृष्टं
न ध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥८३॥

यक्षगृह-वर्णनं २

भूयोऽपि अभिज्ञानकथनव्याजेन निजगृहं वर्णयति—वापीति ।

हे मेघ, च पुनः अस्मिन् उद्याने मरकतशिलाबद्धसोपानमार्गा मरकतशिलाभिः बद्धः रचितः सोपानमार्गः पदस्थानीयपथः पगथियां इति लोके यत्र सा ।

स्निग्धवैडूर्यनालैः स्निग्धाः वैडूर्याणां नालाः वैडूर्यमणीनां नालाः जलोपरिगमना गमनमार्गाः पूलिकाः तैः ।

हैमैः सुवर्णरंगैः विकचकमलैः विकसितकमलपुष्पैः छन्ना व्याप्ता आच्छादिता वापी सरोवरिका वर्तते ।

यस्याः वाप्याः सरोवरिकायाः तोये जले कृतवसतयः कृतस्थानाः हंसाः, संनिकृष्टं समीपे स्थितमपि मानसं मानसरोवरं न ध्यास्यन्ति न स्मरिष्यंति । अपि पुनः त्वां प्रेक्ष्य अवलोक्य तु व्यपगतशुचः गतशोकाः सन्तः मानसं न स्मरिष्यन्त्येव ।

स्निग्धवैडूर्यनालैः अस्यार्थः श्रीमल्लिनाथेन अन्यैश्च स्निग्धानि वैडूर्याणि नालानि दंडाः येषां तैः कमलैः इति कृतः स न यथार्थः । कमलदंडानां स्निग्धताऽभावात् । सूक्ष्मरोमयुक्ता अस्निग्धा एव ते भवन्ति । दंडा वैडूर्याणां न भवितुं शक्याः । दीर्घवैडूर्यनालैः इदं पाठांतरमपि न युज्यते । कमलदंडानां दीर्घतया कमलानां शोभाभिवृद्धिर्न संभवा । अतः स्निग्धपाठ एव युक्तः । अनेन पूलिकाया अर्थे नालाशब्दप्रयोग एवात्र महाकविना कृतोऽस्ति ॥ ८३ ॥

In it there is a small pond, with its flight of steps built of emerald slabs, which is covered with full-blown golden lotuses and which has arches of smooth Vaidurya gems; in the waters of which the swans, having taken up residence

and freed from worry, do not long for the near-by lake Manas, even at your approach

DESCRIPTION OF THE YAKSHA'S HOUSE -2

( O Cloud, in that garden, there is a small pond—its flight of steps built of emeralds,—full of blooming golden lotuses and having arches and small bridges made of Vaidurya gems The swans, living in the water of this pond, do not wish to go to Lake Manas, though it is nearby Not the least they will desire to go, especially on seeing you ) 83

तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।
मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥८४॥

यक्षगृह-वर्णनं ४

हे जलद, तस्याः वाप्याः सरोवरिकातीरे पेशलैः मनोहरैः इन्द्रनीलैः इन्द्रनीलमणिभिः रचितशिखरः निर्मितशृङ्गः कनककदलीवेष्टनप्रेक्षणीयः स्वर्णरम्भाणां स्वर्णरम्भाणां कदलीनां स्वर्णकदली 'सोनकेल सोनेरीकेला' इति लोके तासां आवेष्टनं परितः वेष्टनं तेन प्रेक्षणीयः सादरं अवलोकनीयः क्रीडाशैलः वर्तते ।

हे सखे हे मित्र अहं त्वां प्रेक्ष्य अवलोक्य सः क्रीडाशैलः मद्गेहिन्याः प्रियः वल्लभः इति उपान्तस्फुरिततडितं उपान्ते उपरिगतां पर्यन्ते । तत्र स्फुरिता उल्लसिता तडित् विद्युत् यस्मिंस्तं एतादृशं त्वां तथा तं क्रीडाशैलं कातरेण अधीरेण चेतसा हृदा एव स्मरामि ॥ ८४ ॥

On its bank, there is a mount of sport, with its peak made up of beautiful sapphires and charming to look at owing to the encirclement of golden plantain trees After seeing you with lightning flashing about the top, I remember, O friend, that very mount, with an impatient heart, as it was so dear to my wife

## DESCRIPTION OF THE YAKSHA'S HOUSE :-3.

( O Cloud, on the bank of that pond, there is a pleasure-hill with its top built of fine sapphires and which looks beautiful on account of its being enclosed by golden Plantain trees O friend, on seeing you at this time, I remember with an impatient heart the scene which will be exhibited, when you will reach that mount dear to my wife and when your lightning will be flashing about its top ) 84.

रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्डपस्य ।
एकः सख्यास्तव सह मया वामपादाभिलाषी
कांक्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥ ८५ ॥

यक्षगृह-वर्णनं ४

हे मेघ, अत्र पर्वतोद्याने, चलकिसलयः चंचलपल्लवः रक्ताशोकः रक्तपुष्पः अशोकवृक्षः विद्यते । अन्यः कान्तः मनोहरः केसरः बकुलवृक्षोऽपि विद्यते । तौ कुरवकवृतेः कुरवकानां मरुवकसुगंधिक्षुपानां वृतिः वाटिः वाड्य लोके यस्य तस्य माधवीमंडपस्य अतिमुक्तलतामंडपस्य प्रत्यासन्नौ निकटस्थौ स्तः ।

दोहदव्याजेन दोहदः प्रसवसहायक द्रव्यं तस्य छद्मना तयोर्द्वयोर्मध्ये एष रक्ताशोकः मया सह मया साकं तव सख्याः तव भ्रातृजायायाः मम पत्न्या वामपादाभिलाषी अस्ति वामचरणमभिलषति । अन्यः बकुलः अस्याः तव सख्याः मया सह वदनमदिरां सुरागण्डूषं इच्छति ॥ ८४ ॥

The red Ashok with sprouts waving about and charming Bakula are here situated near the bower of Madhavi creepers with a hedge of Kuravak plants around. The flower along with me wishes for the left foot of your friend; while the latter has a desire for wine from her mouth, under the pretext that it will cause them to bloom.

## DESCRIPTION OF THE YAKSHA'S HOUSE :-4.

( O cloud, in this garden with the mount, there are

two trees, the one being an Ashok with red flowers and smiling shoots and the other a Bakul. Both those trees are standing near a bower of chameli creepers, surrounded by a hedge of Kuravak plants. As a help in delivery i. e. for production of flower and fruits, the red Ashok like me, longs for the touch of the left foot of your friend—my wife; while the Bakul is desirous of having a gargle of wine, from her mouth. ) 85.

तन्मध्ये च स्फटिकफलिका कांचनी वासयष्टि-
मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः सिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकंठः सुहृद्वः ॥ ८६ ॥

यक्षगृह-वर्णनं ५

हे मेघ, तन्मध्ये तयोर्द्वयोः रक्ताशोकबकुलयोर्मध्ये वासयष्टिः विद्यते वासयष्टिः निवासदंडः पंजरदंडः निवासस्तंभिका अस्ति । कथं भूता सा ।

स्फटिकफलिका स्फटिकमणिमया फलिका पीठिका उपवेशनभूमिः यस्याः सा । संपूर्णा यष्टिः कांचनी सुवर्णमयी, मूले मूलविभागे अधस्तात् अनतिप्रौढ-वंशप्रकाशैः न अतिप्रौढा न अतिपक्वाः न लघवः एतादृशा ये वंशाः तेषां प्रकाशः सौन्दर्यं इव प्रकाशो येषां ते मणयः रत्नानि तैः मणिभिः बद्धा खचिता। एतादृशी मयूरस्य वासयष्टिः निवासस्थानरूपपंजरयुक्ता यष्टिः स्तंभिका। विद्यते। थांभली इति सौराष्ट्रे ।

मे मम कान्तया गेहिन्या सिञ्जद्वलयसुभगैः शब्दायमानकंकणमनोहरैः करतलवादनकृतैः तालैः नर्तितः नृत्यं कारितः यः युष्माकं सुहृद् मित्र मयूरः दिवसविगमे सन्ध्याकाले यां वासयष्टिं अध्यास्ते उपविशति निवासं करोति निद्राति ॥ ८६ ॥

Between them there is a golden perching rod with a crystal seat, studded at the bottom with jewels, shining like young bamboos; on which, at the end of the day, roosts your friend—a peacock—, caused to dance by my beloved with clappings of hands, charming on account of jingling bracelets.

DESCRIPTION OF THE YAKSHA'S HOUSE :-5.

( O cloud, between the red Ashok and the Bakula, there is a small pillar studded with gold, with a cage like seat on it, inlaid with crystals The bottom of the pillar is set with jewels shining like bamboos, neither unripe nor over-ripe but of mature appearance. At the close of the day there sits on it a peacock—your friend—caused to dance in tunes, agreeable on account of the tinkling bangles of my wife. ) 86.

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथा
द्वारोपान्ते लिखितवपुषौ शंखपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ ८७ ॥

यक्षगृह-वर्णनं ६

हे साधो सज्जन विद्वन् मेघ, हृदयनिहितैः हृदयस्थैः स्मृत्या धारितैः एभिः उपर्युक्तलक्षणैः भवनं मम गृहं लक्षयेथाः निश्चिनुयाः ।

उपर्युक्तलक्षणैः पुनः अन्यैः लक्षणैः द्वारोपान्ते द्वारस्य समीपे द्वारपार्श्वयोः शंखपद्मौ शंखश्च पद्मश्च तौ लिखितवपुषौ लिखितं वपुः आकृतिः शरीरचित्रं ययोस्तौ द्वारपालरूपेण चित्रितौ दृष्ट्वा, मद्वियोगेन मम वियोगदुःखात् नूनं अवश्यं मम तद् भवनं सूर्यापाये निशामुखे रात्रौ अपि क्षामच्छायं क्षीणा अल्पा शोभा यस्य तत् गतकान्ति अस्ति इति तर्कयामि । कथमिव सूर्यापाये सूर्ये अस्तं गते सति निशामुखे कमलं पद्मं स्वां निजां अभिख्यां कान्तिं न पुष्यति न धारयति तद्वत् मद्विरहेण मम गृहं अपि रात्रौ निरुत्साहेन शोकमग्नतया अल्पदीपादिशोभाकरणेन तेजोहीनं वर्तते इति तर्कयामि । इत्थं अन्यगृहेभ्यः भिन्नतासाधकतः मद्गेहस्याभिज्ञानं तव सुलभं स्यादिति भावः ॥ ८८ ॥

O good one, with these signs treasured in your heart and on seeing the Shankha and Padma figures pointed on both the sides of the door, you will recognise the house, now indeed dimmed in lustre on account of my separation.

Surely, in the absence of the sun, a lotus maintains no beauty of its own

DESCRIPTION OF THE YAKSHA'S HOUSE :-6

( O good cloud, by means of signs already told and which I still relate, you will be able to find out my house.

On both the sides of the door of my house, there are painted the figures of two door-keepers—Shankha and Padma I think that that house of mine will appear dim in lustre even at night due to my separation, in the same way as a lotus which cannot develop its beauty after sunset You will be able to distinguish easily and at once my house from others, as under the grief of my separation, it will have less of lamps and consequently the less of lustre, compared with other houses of Alaka ) 87

गत्वा सद्यः कलभतनुतां शीघ्रसंपातहेतोः
क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।
अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ ८८ ॥

अभिधानानि कथयित्वा इदानीं स्ववनितादर्शनप्रकारमाह—

हे मेघ, शीघ्रसंपातहेतोः शीघ्रं त्वरितं संपातः पतनं तस्य हेतोः कारणात् कलभतनुतां गत्वा कलभः करिपोतः तद्वत् तनुतां लघुतां गत्वा प्राप्य प्रथमकथिते आदौ व्यावर्णिते रम्यसानौ रमणीयः मनोज्ञः शिखरः यस्य तस्मिन् क्रीडाशैले निषण्णः उपविष्टः सन् खद्योतालीविलसितनिभां खद्योताः रात्रिपतगाः अग्निपतगाः आगिया पतंगिया इति लोके तेषां आली समूहः श्रेणिः तस्याः विलसनं विलासः स्फुरितं तस्य निभां समानां, विद्युदुन्मेषदृष्टिं विद्युत एव उन्मेषः निमेषोन्मेषरूपा दृष्टिः तां, अल्पाल्पभासं अल्पा अल्पा भाः दीप्तिर्यस्यास्तां यथा स्यात्तथाभूतां अन्तर्भवनपतितां भवनस्य अन्तः गृहस्य मध्ये तत्र पतितां प्रविष्टां कर्तुं अर्हसि ॥ ८८ ॥

Adopting at once the form of a young elephant with a view to descend quickly and seated on the above-said mount of sport with a charming peak, you will cast into

the interior of the house your eye, consisting of the lightning flash, slightly brilliant and resembling the beauty of a line of fire-flies.

( The cloud is now told the way to observe the Yakshas wife, after signs to recognise his house have been given. )

( O Cloud, to alight quickly on my house, assume the small form of the young one of an elephant. Seated on the aforesaid pleasure-mount with a beautiful summit, you should then arrange to cast into the interior of that house your glance in the form of a lightning flash, shining gradually like a line of fire-flies. ) 88.

तन्वी श्यामा शिखरदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षिता निम्ननाभिः ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥ ८९ ॥

यक्षप्रिया-वर्णनं १

इदानीं निजजायां स्वभवने स्थितामन्य इतरनारीभ्यः सातिशयं भिन्नरूपेण निरूपयन्नाह—तन्वीति ।

हे मेघ, तत्र भवनमध्ये दृष्टिपातेन त्वं ईदृशीं स्त्रियं द्रक्ष्यसीति वर्णयति ।

तन्वी कृशतनुः नातिपुष्टशरीरा इति आकृतिसुंदरा, पुनः श्यामा युवतिः अप्रसूता षोडशवार्षिकी । पुनः शिखरदशना शिखरं तीक्ष्णः अग्रभागः तद्युक्ता दशनाः दंताः यस्याः सा सुदती । पुनः पक्वबिम्बाधरोष्ठी पक्वं अत्यंतरक्तवर्णं यत् बिम्बीफलं तद्वत् रक्तः अधरोष्ठः यस्याः सा । पुनः मध्ये क्षामा मध्यभागे कृशा दुर्बला । पुनः चकितहरिणीप्रेक्षिता चकिता त्रस्ता भीता हरिणी मृगी तद्वत् प्रेक्षितं विलोकितं यस्याः सा । निम्ननाभिः निम्ना गंभीरा नाभिः यस्याः सा । श्रोणीभारात् अलसगमना श्रोणी कटिपश्चाद् भागः कुला इति लोके तयोः श्रोण्योः भारः पुष्टता तस्मात् तेन कारणेन अलसं मन्दं मन्थरं गमनं यस्याः सा । पुनः स्तनाभ्यां पुष्टकुचाभ्यां स्तोकनम्रा ईषन्नमनशीला । एवंप्रकारा या नारी तत्र भवने स्यात् भवेत् सा मम जायास्तीति जानीयाः । सा युवतिविषये स्त्रीविषये धातुः विधातुः ब्रह्मणः आद्या सृष्टिः इव निवृत्तविधिना प्रथमं घटिता इवास्ति ॥ ८९ ॥

Slender in form, youthful, of pointed teeth, with the lower lip like a ripe Bimba fruit, lean in waist, with eyes as those of a frightened deer, of a deep navel, with a slow gait due to the weight of hips, slightly stooping owing to breasts—She, who should be there, is the first creation as it were of the Creator in the matter of young ladies.

## DESCRIPTION OF THE YAKSHA'S WIFE–1.

( O Cloud, you will be able to distinguish my wife from other ladies of the house in the way that—

She, who is slender in body, handsome and youthful, with pointed white teeth, with the lower lip red like a ripe Bimba fruit, of thin waist, sharp-eyed like a deer in fear, *with deep navel, walking slowly on account of* heavy hips, *slightly* bent due to fleshy *breasts*—Know her as my wife. God Brahma has created the ladies. Among them, the creation of my wife is really unique. ) 89.

तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये तुहिनमथितां पद्मिनीवान्यरूपां ॥९०॥

## यक्षप्रिया-वर्णनं २

पुनश्च स्वपत्नीं निरूपयति ।

हे मेघ, परिमितकथां मितभाषिणीं तां उक्तलक्षणां मम पत्नीं मम द्वितीयं अपरं जीवितं जानीयाः । मयि सहचरे पत्यौ दूरीभूते सति एकां चक्रवाकहीनां एकाकीं चक्रवाकीं चकली इति सौराष्ट्रे इव एकाकीं, गुरुषु दुर्वहेषु एषु प्रावृषेण्येषु दिवसेषु वासरेषु गच्छत्सु तां बालां नवयौवनां गाढोत्कंठां गाढा प्रबला उत्कंठा मम मिलनस्य उत्कटेच्छा आतुरता यस्यास्तां जातां मन्ये । तुहिनमथिता हिमेन विकंपिता अत एव अन्यरूपा रूपान्तरं विकृतरूपमापन्ना पद्मिनी इव कमलिनी इव मम जायास्ति अर्थात् ईदृशीं दशामापन्नां तां मन्ये ॥ १० ॥

You should know her, restrained in speech, as my second life, like a lonely female Chakrawak, when I, her companion, am far away. When these long days are passing by, I consider that the young lady, extremely eager, is changed in form like a lotus-creeper struck by frost.

DESCRIPTION OF THE YAKSHA'S WIFE :-2

( O Cloud, know that that wife of mine, speaking few words, is, as it were, my second life. When I, her husband, am far away, she is pining in loneliness like a she-swallow without her male. These days of monsoon are hard to pass. I hence believe that her eagerness to meet me may have been considerebly increased. I presume her condition to be as pitiable as that of a lotus creeper blighted by a hail-storm. ) 90.

नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियाया
निःश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।
हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वा-
दिन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्ति ॥ ९१ ॥

यक्षप्रिया-वर्णनं ३

हे मेघ,

प्रबलरुदितोच्छूननेत्रं प्रबलं बहुदिवसपर्यंतं सततं कृतं रुदितं रोदनं तेन उच्छूने उपरिभागे स्पष्टं दृश्यमानः शूनः शोफः शोथः श्वयथुः तद्युक्ते नेत्रे यस्मिन् तत् ।

निःश्वासानां निःश्वसितानां निसासा इति सौराष्ट्रे अशिशिरतया उष्णतया भिन्नवर्णाधरोष्ठं भिन्नः भ्रष्टः वर्णः रक्तिमा रागः यस्य सः अधरोष्ठः यस्य तत् ।

हस्तन्यस्तवामपाणौ आरोपितहस्ततलन्यस्तगण्डं गाल-लमणा इति लोके वदन् ।

लंबालकत्वात् संस्काराभावात् सुगन्धिततैलाद्यावापपूर्वकं प्रसाधनं तदभावात् लंबिनः अप्रसाधिताः अलङ्कारकुटिलाः केशाः तेषां भावः लंबालकत्वं तस्मात् कारणात् असकलव्यक्ति असकला अपरिपूर्णा अपूर्णा आकृतिर्यस्य तत् ।

तस्याः प्रियायाः प्रेयस्याः मुखं त्वदनुसरणक्लिष्टकान्तेः त्वन् इव अनु-

सरणेन अन्तरितेन क्लिष्टा मलिना क्षीणा कान्तिर्यस्य स तस्य इन्दो चन्द्रस्य दैन्य हीनप्रभावत्व दधाति ईदृश प्रियाया मुखमस्ति ईदृश मुख सा धारयति ॥ ९१ ॥

Verily that beloved's face, resting on hand, with eyes swollen on account of bitter weeping, with lower lip disco loured by hot sighs, not fully visible owing to tresses loosely hanging about, bears the plight of the moon whose lustre has been marred by your pursuit

DESCRIPTION OF THE YAKSHA'S WIFE -3

( O Cloud, when you intervene between, the light of the moon becomes dim Likewise, the face of that beloved has been shorn of lustre The eyes thereon are swollen on account of weeping for many days The redness of its lower lip is dimmed due to hot sighs Its colour is changed Her cheek is resting on the palm of the left hand The face is not fully visible owing to loose hair, uncombed and unoiled, hanging about Such is the face of my wife You will see her in this plight ) 91

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।
पृच्छन्ती वा मधुरवचनां सारिकां पंजरस्थां
कच्चिद् भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥९२॥

यक्षप्रिया-वर्णनं ४

हे जलद सा बलिव्याकुला देवपूजादिव्यापारपरायणा ।
अथवा विरहतनु विरहकृशा भावगम्य चित्ताभिप्रायज्ञेय एतावद्भिर्मासै एतावद् दुर्बल शरीर भविष्यतीतिमत्सादृश्य मम समानाकृति मम चित्र आलिख्य लिखन्ती ।
अथवा पञ्जरस्था पंजरे पात्रे इति लोके तत्र स्थिता मधुरवचना मञ्जु भाषिणी सारिका शुकपत्नी मैना हे रसिके कच्चिद् भर्तु स्मरसि त्व तस्य प्रिया आसीत् इति पृच्छन्ती ।

एताद्दशी सा मम पत्नी ते तव आलोके पुरा प्रथमं प्रथमावलोकने दृष्टिपथं मा निपतति पतिष्यति ॥ ६२ ॥

She will fall within your view either engaged in worship of gods or drawing my likeness, emaciated by separation as pictured by fancy or asking the Sweet-voiced Sarika in the cage, "O romantic one, do you ever remember master, as you were his beloved pet. ?"

DESCRIPTION OF THE YAKSHA'S WIFE 4.

( Or o Cloud, she, your friend, will be seen going through *the worship of gods. Or imagining that owing to separation for so many months,* I may have been *emaciated to* some extent, she will be seen by you drawing my picture, as conceived in fancy. Or you will find her asking the sweet-voiced she-parrot, sitting in the cage, "O romantic one, do you ever remember our lord ? You were very dear to him." ) 92.

उत्संगे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्रांकं विरचितपदं गेयमुद्गातुकामा ।
तंत्रीमार्द्रां नयनसलिलैः सारयित्वा कथंचिद्
भूयो भूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥९३॥

यक्षप्रियावर्णनं ५

हे सौम्य सहृदय दयालो मेघ,

अथवा पुनः कीदृग्दशा सा ते आलोके पतिष्यति तच्छृणु ।

मद्गोत्रांकं मम गोत्रं मदीयं नाम चिह्नं यथा भवति एवं विरचितपदं स्थापितवाक्यं गेयं गीतं उद्गातुकामा सती ।

मलिनवसने विरहत्वात् सम्यगधौते परिहितसाटिकादिवस्त्रवति उत्संगे अंके वीणां निक्षिप्य नयनसलिलैः नेत्रजलैः अश्रुभिः आर्द्रां क्लिन्नां वीणां कथंचित् महता कष्टेन सारयित्वा सज्जां निर्माय कृत्वा । स्वयमपि कृतां स्वयं आत्मना कृतां अपि मूर्च्छनां रागविशेषं भूयोभूयः पुनः पुनः विस्मरन्ती मनसि विस्मारयन्ती ते आलोके निपतिष्यति ॥ ९३ ॥

O Gentle one, or having placed the lute on her lap with dirty garment or desiring to sing out a song so worded as *to contain my name as its characteristic* and *having with* difficulty arranged the lute moist with tears from eyes, she off and on forgets the melody composed by herself.

DESCRIPTION OF THE YAKSHA'S WIFE 5.

( Or O sympathetic and merciful cloud, you will find my wife placing the lute in her lap clad in a dirty garment, desiring to sing out a song so composed as to contain my name, arranging with difficulty the lute moist with tears and forgetting again and again the melody planned by herself. ) 93.

शेषान्मासान् गमनदिवसस्थापितस्यावधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीमुक्तपुष्पैः ।
संयोगं वा हृदयनिहितारम्भमासादयन्ती
प्रायेणैते रमणविरहेष्वंगनानां विनोदाः ॥ ९४ ॥

यक्षप्रियावर्णनं ६

हे मेघ, वा अथवा कीदृशी सा ते आलोके पतिष्यति शृणु । गमनदिवसस्थापितस्य वियोगदिनस्थितस्य अवधेः मर्यादायाः शेषान् अवशिष्टान् चतुरो मासान् देहलीमुक्तपुष्पैः देहली गृहस्य मुख्य प्रवेशद्वार देहली डेलो दरवाजो इति लोके, तस्या गणनया एकद्वित्र्यादिति द्वादशमासानां द्वादशसंख्यया मुक्तैः स्थापितैः पुष्पैः गतमासाना गणना कृत्वा तत्संख्याकानि पुष्पाणि भुवि विन्यस्यन्ती

अथवा हृदयनिहितारंभं चित्तस्थापितोपक्रमं मदंग मत्संयोग आस्वादयन्ती प्राप्नुवन्ती ।

एवं कुर्वाणा ते आलोके पतिष्यति । रमणविरहेषु कान्तवियोगेषु ननु अंगनानां प्रायेण बाहुल्येन एते पूर्वोक्ताः विनोदा भवन्ति ॥ ९४ ॥

Or counting by flowers on the ground at the doorstep the months which have still to run of the period, beginning from the first day of separation, or accomplishing the union

with me, as realised in imagination—generally, such are the amusements of women during separation from lovers

DESCRIPTION OF THE YAKSHA'S WIFE 6.

( Or O Cloud, on the day of separation, my wife has placed at the door-step twelve flowers to signify twelve months. She puts down on the ground one flower, as each month passes by. You will now see her counting the remain four months of separation by four flower to be deposited down under.

*Or closing her eyes, she will be picturing in mind her* union with me through various movements such as embrace etc... O friend, such amusements are generally indulged in by women, when they are separated from lovers. )

( Note :–In the days of poet Kalidas, Vikram Samvat was in vogue. As to-day, the month then began with the first day of the bright half and ended with Amavasya. Kartik was the first month of the year. when this message is given to the cloud, it was the first day of the bright half of Ashadh and four months of separation had yet to go by. This definitely leads to the conclusion that the separation was effected on the first day of the bright half of Kartik. ) 94

सव्यापारामहनि न तथा पीडयेन्मद्वियोगः
शंके रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ।
मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनिशयनासन्नवातायनस्थः ॥९५॥

पक्षप्रियावर्णनं ७

इदानीं स्वपत्नीदर्शनावसरं कथयन्नाह । सव्यापारामिति ।

हे मेघ, अह्नि दिवसे सव्यापारां विविधव्यवसायपरायणां ते सखीं तव भ्रातृजायां मद्वियोगः मम विरहः तथा न पीडयेत् यथा रात्रौ । रात्रौ निर्विनोदां

व्यवसायरहितां अत एव गुरुतरशुचं गुरुतरा अतिशया शुक् शोकः यस्यास्तां महाशोकां मद्वियोगः तां पीडयेत् इति शंके तर्कयामि ।

अतः अवनिशयनासन्नवातायनस्थः अवनिः पृथ्वी गृहस्य भूपृष्ठं तत्र स्थापितं एव शयनं शय्या तस्य आसन्ना निकटा या वातायना गवाक्षी जाली तत्र तिष्ठतीति तत्स्थः सन् मत्संन्देशैः अलं संपूर्णतया सुखयितुं स्वस्थीकर्तुं चन्निद्रां वियोगेन गतनिद्रां साध्वीं पतिव्रतां निशीथे मध्यरात्रौ पश्य आलोकय ॥ ६४ ॥

Separation from me would not afflict her much by day, as she might then be engaged in work; but I am afraid that at night, she, with nothing to amuse her, would have her sorrow greatly aggravated. Hence to gladden her enough with my messages, you, standing at the window, near her bed on the ground, see the faithful one, sleepless at dead of night.

DESCRIPTION OF THE YAKSHA'S WIFE 7.

( O Cloud, by day time, my wife will be engaged in different kinds of household work. Hence, she will not be distressed so much by my separation then as at night, when she will be quite free and without work. I think she will be much engrossed in grief at night.

She has her bed on the ground, nearby which there is a window. You take your seat on it and look at that *faithful wife of mine at dead of night,* sleepless on account of my separation, to cheer her up with my message. ) 95.

आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां
प्राचीमूले तनुरिव कलामात्रशेषां हिमांशोः ।
नीता रात्रिः क्षणमिव मया सार्धमिच्छारतैर्या
तामेवोष्णैर्विरहजनितैरश्रुभिर्यापयन्ती ॥ ९६ ॥

यक्षप्रियावर्णनं ८

हे मेघ सा किं कुर्वती रात्रिं यापयतीति शृणु ।

आधिक्षामा आधिना मनःपीडया कृशा, विरहशयने वियोगशय्यायां भूम्यां आस्तृतायां नतु पर्यंके सन्निषण्णैकपार्श्वा सन्निषण्ण स्थितं एक पार्श्वं यस्याः सा। प्राचीमूले पूर्वदिशामुखे कलामात्रशेषा एककलामात्रेण अवशिष्टा हिमांशोः द्वितीयायां चन्द्रस्य तनुरिव मूर्तिरिव सा अवलोक्यते।

पूर्वं या रात्रिः मया सार्धं मया सह इच्छारतैः यथाभिलषितसुरतकेलिभिः क्षणमिव मुहूर्तमिव नीता गमिता, तामेव रात्रिं विरहजनितैः वियोगोत्पन्नैः उष्णैः अश्रुभिः रोदनजलैः यापयन्ती सा ते आलोके पतिष्यति ॥ ९६ ॥

( You will see her ) Emaciated by mental agony, resting on one side of the bed of separation, resembling the disc of the *moon* with *only one* digit *in the* eastern *horizon* and passing with hot tears of separation that very night, which was passed, like a moment, in my company with enjoyments at will.

## DESCRIPTION OF THE YAKSHA'S WIFE 8.

( *My wife will* appear *to you emaciated by* mental anguish, resting on one side in her bed of separation on the ground and like a disc of the moon, with its one digit only, remaining behind in the eastern quarter.

Formerly in my company and with pleasures of senses at will, she used to pass the whole night like a moment. You will now see her passing that very night with hot tears brought on by separation. ) 96.

निःश्वासेनाधरकिसलयक्लेशिना विक्षिपन्ती
शुद्धस्नानात्परुषमलकं नूनमागण्डलम्बि ।
मत्संयोगः सुरतमुपनयेत्स्वप्नजोऽपीति निद्रा-
माकांक्षन्ती नयनसलिलोत्पीडरुद्धावकाशाम् ॥ ९७ ॥

यक्षप्रियावर्णनं ९

हे मेघ, नूनं निश्चयेन शुद्धस्नानात् सामान्यजलस्नानात् आमलकचूर्णादि-कथितजलरहित यन्मस्तकस्नानं अलकक्षालनं तस्मात् परुषं कठिनं ग्रन्थितं आगण्डलम्बि कपोलयोः अभिव्याप्तं अलकं केश कुटिलकेशसंचयं, अधर-

किसलयक्लेशिना अधरोष्ठपल्लवदाहिना निःश्वासेन मुखमारुतेन विक्षिपन्ती विरलीकुर्वती दूरीकुर्वती।

पुनः नयनसलिलोत्पीडरुद्धावकाशां नयनयोः नेत्रयोः सलिलं अश्रु तस्य उत्पीडः पूरः तेन रुद्धः अवकाशः मार्गः यस्यास्तां निद्रां स्वप्नजः अपि स्वप्नलब्धोऽपि मत्संयोगः सुखमुपनयेत् सुखमुत्पादयेत् इति हेतोः निद्रासौख्यं आकांक्षन्ती अभिलषन्ती सा तव आलोके पतिष्यति ॥ ९७ ॥

( You will see her ) Casting aside with a sigh, marring Her sprout–like lower lip, the tresses of hair, coarse on account of a simple bath and hanging verily on her cheeks; thinking how union with me, though in a dream, could bring about happiness; and longing for sleep, the scope for which is prevented by the gush of tears from the eyes.

DESCRIPTION OF THE YAKSHA'S WIFE 9.

( O Cloud, you will see my wife throwing aside, with a hot sigh heating the lower lip, her tresses of hair, rough and deprived of softness because of bath with only simple water, unmixed with scented oil or fragrant substances to wash the hair with. Imagining that union with me, even accomplished in a dream, will bring about happiness, she will be seen by you longing for sleep, rendered impossible by the flow of tears from eyes.

आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा
शापस्यान्ते विगलितशुचा सा मयोद्वेष्टनीया ।
स्पर्शक्लिष्टामयमितनखेनासकृत्सारयन्ती
गण्डाभोगात्कठिनविषमामेकवेणीं करेण ॥ ९८ ॥

हे मेघ, आद्ये प्रथमे विरहदिवसे वियोगावसरे दाम हित्वा कुसुमयुक्तकेशबन्धनदोरकं विहाय त्यक्त्वा या शिखा एकवेणी चोटलो इति लोके विना दोरकं बद्धा सा शापस्य देशनिष्कासनरूपिण्याः आज्ञायाः अन्ते अवसाने पर्यन्ते विगलितशुचा गतशोकेन मया सा उद्वेष्टनीया उन्मोचनीया इति तस्या व्रतमस्ति ।

स्पर्शक्लिष्टां स्पर्शेन क्लेशोत्पादिनी कष्टदायिनी दुःखकरी कठिनविषमां

कठिना च विषमा च कठोर-स्पर्शा स्नेहादिसंस्काराभावात् अतएव एकवेणी एकसल्याकां कबरीं असकृत् मुहुः गंडाभोगात् कपोलफलकात् अयमितनखेन अकर्तितनखेन करेण पाणिना सारयन्ती अपास्यन्ती सा तव आलोके पतिष्यति ॥ ९८ ॥

( You will see her ) throwing aside again and again, by her long-nailed hand, that single braid of hair, from the surface of her cheeks, a braid--hard, irregular and painful to touch; which was tied up without a string on the first day of separation and which is to be loosened by me, devoid of sorrow, at the end of the curse.

DESCRIPTION OF THE YAKSHA'S WIFE 10.

( O Cloud, she has decided that the braid of hair, which has been tied up without a string having flowers, on the first day of separation, is to be loosened at my hands alone, when I meet her with pleasure after a year, when the days of exile will be over You will see her casting aside often and often that single braid of hair by her long-nailed hand from her checks,— a braid which is painful to touch, tied irregularly and rough without the application of scented oil etc. ) 98

पादानिन्दोरमृतशिशिरान् जालमार्गप्रविष्टान्
पूर्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव ।
खेदाच्चक्षुः सलिलगुरुभिः पक्ष्मभिश्छादयन्ती
साभ्रेऽह्नीव स्थलकमलिनी न प्रबुद्धा न सुप्ता ॥ ९९ ॥

यक्षप्रियावर्णनं ११

हे मेघ, पूर्वप्रीत्या पूर्वपरिचयेन अमृतशिशिरान् पीयूषशीतलान् जालमार्गप्रविष्टान् गवाक्षविवरैरागतान् इन्दोः चंद्रस्य पादान् किरणान् अभिमुखं सम्मुखं गतं सत् त्वरितमेव निवृत्तं प्रतिनिवृत्तं चक्षुः नयनं सलिलगुरुभिः अश्रुपूर्णैः पक्ष्मभिः खेदात् कष्टेन छादयन्ती न प्रबुद्धा न जागरिता, न सुप्ता न च निद्रां प्राप्ता तव आलोके पतिष्यति ।

यथा साभ्रे अभ्राच्छादिते अह्नि दिवसे स्थलकमलिनी न प्रबुध्यति न स्वपिति तद्वत् ॥ ११ ॥

( You will see her ) Covering with eye-lashes, heavy with tears through dejection, the eye, which on account of former pleasure turned towards the nectar-like cool rays of the moon coming through the latticed windows and which turned back at once from them, appearing like a ground lotus creeper, neither bloomed nor closed on a cloudy day.

## DESCRIPTION OF THE YAKSHA'S WIFE 11.

( You will find my wife neither awakened nor asleep but covering with pain her eyes, which on account of previous affection turned towards the nector-like cool rays of the moon coming through the window and turned back at once from them. You will see her in the same condition as that of a lotus creeper on land, neither open nor closed on a cloudy day obstructing the sun ) 99.

सा संन्यस्ताभरणमबला पेशलं धारयंती
शय्योत्संगे निहितमसकृद् दुःखदुःखेन गात्रम् ।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥१००॥

## यक्षप्रियावर्णनं १२

हे मेघ, संन्यस्ताभरणं परित्यक्ताभूषणं वर्जितमण्डन, पेशलं दुर्बल, शय्योत्संगे निहितं शय्याया उत्संगं मध्यभागः तस्मिन् असकृत् वार वार निहितं स्थापित गात्रं अर्थात् संपूर्णभूमिगतायामपि शय्यायां सपूर्णायां न स्वपिति अपि तु शय्यार्धभागे एव गात्र दुःखदुःखेन अतिकष्टेन धारयन्ती सा अबला नवजलमयं नवजलबिन्दुभिः त्वां अपि अवश्य निश्चयेन अस्र अश्रु मोचयिष्यति ।

यत्कारणात् प्रायः बहुधा सर्वः करुणावृत्तिः दयापरः मनुष्य आर्द्रान्तरात्मा मृदुहृदयः भवति ॥ १०० ॥

That weak woman having a delicate body devoid of ornaments, placed off and on in great pain on the middle of the bed, will surely cause even you to shed tear in the form of new rain: every kind-hearted person is, as a rule, of a merciful nature.

DESCRIPTION OF THE YAKSHA'S WIFE 12.

( O Cloud, that weak woman bearing a delicate body with no ornaments and thrown repeatedly on the middle of the bed in great pain, will surely compel even you to shed tears. Really the heart of a man with compassionate nature is always soft with feelings. ) 100.

जाने सख्यास्तव मयि मनः संभृतस्नेहमस्मा-
दित्थंभूतां प्रथमविरहे तामहं तर्कयामि ।
वाचालं मां न खलु सुभगंमन्यभावः करोति
प्रत्यक्षं ते निखिलमचिराद् भ्रातरुक्तं मया यत् ॥१०१॥

यक्षप्रियावर्णनं १३

तस्याः विरहदशायाः सत्यं संस्थापयन् आह जाने इति ।

हे मेघ, अहं जाने अवगच्छामि यत् तव सख्याः भ्रातृजायायाः मनः मयि विषये संभृतस्नेहं पुष्टानुरागमस्ति । अस्मात् कारणात् प्रथमविरहे आद्यवियोगे सति तां इत्थंभूतां अहं तर्कयामि एवंविधां विचारयामि ।

खलु अवश्यं सुभगंमन्यभावः तस्यां सौहार्दातिरेकेण गुणातिरेककल्पनाभावः मां वाचालं न करोति अपितु सर्वं सत्यमेवोक्तं मया ।

हे भ्रातः यन्मया उक्तं उपरिवर्णितं निखिलं समस्तं तत् ते तव अचिरात् अल्पकालेनैव प्रत्यक्षं भविष्यति । त्वमपि तां एवंविधां द्रक्ष्यसीति भावः ॥ १०१ ॥

I know your friend's heart to be full of affection for me. Hence I conjecture her to be in this plight during the first separation. Surely it is not an exaggerated opinion about self or infatuation for her that makes me speak this. O

brother, whatever is uttered by me will all be obvious to you in a short time

DESCRIPTION OF THE YAKSHA'S WIFE 13

( O Cloud, the heart of your friend-my wife-is deeply attached to me Therefore I imagine her to have come to this condition on first separation Do not think that I speak all this because I am excessively enamoured of her What I say is entirely true O brother, what has been uttered by me above will all be realised by your own eyes in a short time You will be convinced then that her condition is just the same as I have described ) 101

रुद्धापागप्रसरमलकैरंजनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ।
त्वय्यासन्ने नयनमुपरिस्पंदि शंके मृगाक्ष्या
मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥१०२॥

यक्षप्रियावर्णनं १४

हे मेघ, अहं शंके विचारयामि यत् त्वयि आसन्ने निकटवर्तिनि सति अलकैः कुटिलकेशैः रुद्धापागप्रसर रुद्ध निरुद्ध अपागयो नेत्रपर्यंतयो प्रसर विस्तार यस्य तत् ।

अंजनस्नेहशून्य अंजनेन स्नेह मृदुता मसृणता तेन रहित कज्जलसपर्क रहितम् । अपिच पुन मधुन मद्यस्य प्रत्यादेशात् निराकरणात् अपासनात् विस्मृतभ्रूविलास विस्मृत भ्रुवो विलासो भ्रूभगो येन तत् ।

एतादृश मृगाक्ष्या मम जायाया उपरिस्पन्दि उपरिदेशे स्पन्दमान नयन नेत्र मीनक्षोभात् मीनाना मत्स्याना क्षोभात् द्रुतगमनागमनात् चलकुवलय श्रीतुला चल चचल कुवलय नीलकमल तस्य श्री शोभा तस्या तुला समानता एष्यति प्राप्स्यति इति शंके विचारयामि ।

(१) स्त्रीणां ऊर्ध्वनेत्रस्फुरण सामुद्रिकशास्त्रानुसार इष्टप्राप्तिसूचकम् ॥१० ॥

I imagine that the eye of the gazelle-eyed one, side glances of which are obstructed by tresses of hair, which is devoid of the glossiness of collyrium, which has forgotten

sporting of the eye-brows owing to abstinence from wine and which throbs in the upper part when you will be near, will bear comparison with the beauty of a lotus waving to and fro on account of the movements of the fish

## DESCRIPTION OF THE YAKSHA'S WIFE 14

O Cloud, I think that when you will be near, the eye of my deer-eyed wife, outer corners of which are obstructed by tresses, which has no collyrium applied to it, and which has forgotten the sporting of the eye-brows on account of giving up wine, will be throbbing in the upper part. It will be appearing beautiful, I imagine, like a blue lotus, waving to and fro owing to the movements of the fish. )

( Note-:- According to the astrological science, the throbbing of the upper-eyelid of a woman is a good omen foretelling meeting with the husband ) 102.

वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयै-
मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या ।
संभोगान्ते मम समुचितो हस्तसंवाहनानां
यास्यत्यूरुः सरसकदलीस्तंभगौरश्चलत्वम् ॥ १०३ ॥

## यक्षप्रियावर्णनं १५

हे मेघ, मदीयैः कररुहपदैः नखव्रणैः नखचिह्नैः मुच्यमानः त्यज्यमानः ।

चिरपरिचितं चिरकालेन नित्य परिहितत्वेन परिचितं अभ्यस्तं मुक्ताजालं मौक्तिककलापं दैवगत्या प्रारब्धवशात दुर्दैवेन त्याजितः ।

संभोगान्ते निधुवनावसाने मम हस्तसंवाहनानां हस्ताभ्यां संवाहन मर्दनं स्पर्शनं तद्योग्यः पूर्वं मम हस्ताभ्यां संवाहनं प्राप्तः ।

सरसकदलीस्तम्भगौरः सरसः रसभरितो यः कदल्याः स्तंभः तद्वत् तत्सदृशो गौरवर्णः एतादृशः अस्याः प्रियायाः वामः ऊरुः त्वयि आसन्ने सति चलत्वं यास्यति स्फुरणं प्राप्स्यति ।

(१) सामुद्रिकानुसारं स्त्रीणां वामोरुस्फुरणं प्रियसंगप्राप्तिं सूचयति ॥१०३॥

And her thigh–devoid of my nail–marks, robbed of a long familiar string of pearls through the course of fate, fit to be shampooed by my hands at the end of sexual enjoyment and white like the trunk of a juicy plantain tree—will throb ( when you will approach nearby ).

DESCRIPTION OF THE YAKSHA'S WIFE 15.

( O cloud, I think that when you will reach my wife, her left thigh—free from my nail–marks, avoided since a long through ill–luck by the waist–band of pearls, gently shampooed by me to remove fatigue after sexual intercourse, white and soft like the trunk of juicy plantain tree—will start throbbing ) 103.

तस्मिन्काले जलद यदि सा लब्धनिद्रासुखा स्या-
त्त्रासीनः स्तनितविमुखो याममात्रं सहस्व ।
मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथंचित्
सद्यःकंठच्युतभुजलताग्रन्थि गाढोपगूढम् ॥ १०४ ॥

यक्षप्रियावर्णनं १६

हे जलद मेघ, तस्मिन् काले मध्यरात्रिसमये यदि सा मद्वल्लभा लब्धनिद्रासुखा स्यात् प्राप्तनिद्रासुखा स्यात् चेत् तदानीं त्वं स्तनितविमुखः गर्जितपराङ्मुखो भूत्वा तत्रासीनः तत्र तस्मिन् गवाक्षे जालिकायां उपविष्टः सन् याममात्रं प्रहरपर्यंतं सहस्व प्रतीक्षस्व ।

कथंचित् महाकष्टेन प्रणयिनि, भर्तरि मयि स्वप्नलब्धे स्वप्ने प्राप्ते सति अस्याः मत्प्रियायाः प्राप्तं गाढोपगूढं दृढालिंगनं सद्यःकंठच्युतभुजलताग्रन्थि मा भूत् सद्यः तत्कालं कंठात् च्युता विश्लिष्टा भुजलता तस्याः ग्रन्थिर्यस्य तत् मा भूत् न भवेत् ॥ १०४ ॥

O cloud, if at that time, she is having the bliss of sleep, wait there just for three hours, seated and devoid of thunder. Let not her close embrace have its knot of creeper-like arms loosened from the neck when I, her lover, have been obtained with great difficulty in a dream.

## DESCRIPTION OF THE YAKSHA'S WIFE 16.

( O cloud, if at dead of night, my wife by sleeping, stop your thunder, sit near the window and wait there for about three hours, till she gets up Do not distrub her in sleep, so that her close clasp with arms around my neck,— her lover, seen by her with great difficulty in a dream,— may not be loosened. ) 104.

तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।
विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरस्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥ १०५ ॥

यक्षप्रियावर्णनं १७

हे जलद, निद्रितां प्रहरं प्रतीक्ष्य तां प्रियां स्वजलकणिकाशीतलेन निजपानीयस्य कणिकाः तुषारसदृशा अतिस्वल्पबिन्दवः ताभिः शीतलेन शिशिरेण अनिलेन वायुना अभिनवैः नूतनैः मालतीनां जालकैः कोरकैः झुमका इति लोके, तैः मम सार्धमेव उत्थाप्य अर्थात् मालतीनां नवीनकोरकाः जलकणिकाः ताभिः शीतलेन वायुना जागरिता विकसिता भवन्ति तया सापि जागरिता भविष्यति । इत्थं तां उत्थाप्य प्रत्याश्वस्तां स्वस्थीभूतां स्तिमितनयनां निश्चलनेत्रां मानिनीं त्वत्सनाथे त्वदारूढे गवाक्षे वातायने स्थितः विद्युद्गर्भः विद्युत गर्भे मध्ये यस्य सः त्वं धीरस्तनितवचनैः गंभीराल्पगर्जितपूर्वाणि वाक्यानि तैः वक्तुं जल्पयितुं प्रक्रमेथाः ॥ १०५ ॥

Having awakened her by a breeze cool with your water-drops, you with lightning concealed within, should commence to talk, O wise one, in words of thunder, to that proud lady, refreshed like the new blossoms of Malati flowers, and having her eyes steadily fixed on the window, occupied by you.

## DESCRIPTON OF THE YAKSHA'S WIFE 17.

( O cloud, awaken her thereafter with a breeze, cool with your dew-like fresh drops of water. When she, refres-

hed like a cluster of newly bloomed Malati buds, becomes at ease and with steady eyes, you, sitting in the window with lightning drawn inside, should proceed straightway to talk to her in words, sobre and serene. In other words, the wind, cool with the rain of your dew-like water drops, will rouse my wife from sleep It will also cause the clusters of Chameli buds to bloom Feeling the cool wind mixed with the fragrance of Chameli flowers against her body, my wife will soon be awakened from sleep Thereafter when she sits at ease, you start talking to her, carefully seeing not to emit out then your flashes of lightning ) 105

भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
त्वत्सन्देशैर्मनसि निहितैरागतं त्वत्समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्दस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ १०६ ॥

यक्षप्रियावर्णनं १८

हे अविधवे जीवद्भर्तृके, हे अखण्डसौभाग्यवति, मनसि निहितैः त्वत्सन्देशैः त्वत् तव सम्बन्धिनस्तेन कथिताः सन्देशाः तैः सहागतं मनसि हृदये निधाय त्वत्समीपं आगतं त्वदारात् समागतं ईदृशं मां भर्तुः तव पत्युः यक्षस्य प्रियं अभीष्टं मित्रं अम्बुवाहं जलधरं मेघं विद्धि जानीहि ।

यः अम्बुवाहः मेघः श्राम्यतां मार्गश्रमनिवारणाय विश्रान्तिं गृह्णतां प्रोषितानां प्रवासिनां पुरुषाणां वृन्दानि मन्दस्निग्धैः मन्दैः गम्भीरैः स्निग्धैः कर्णमनोरमैः ध्वनिभिः गर्जितैः अबलावेणिमोक्षोत्सुकानि अबलानां वेणिः पद्धा कबरी अबोडो इति सौराष्ट्रे—तस्याः मोक्षः मोचनं प्रथकरणं तस्मिन् उत्सुकानि आतुराणि, करोति गृहागमनाय त्वरयति उत्सुकयति इत्थं पुरुषान् जायाश्च उपकरोति ॥ १०६ ॥

O you, blessed with a husband, know me, a cloud, to be the dear friend of your husband, one who has come to you with messages treasured up in mind, a cloud which hastens up, by gentle and sweet rumbling, the crowds of travellers

fatigued on the way, and longing to untie the hair-knots of their beloved.

DESCRIPTION OF THE YAKSHA'S WIFE 18.

( O you blessed with a husband, know that I, a cloud, am the friend of your husband. I have come to you with a message from him for you persons out for business, for work in the fields or for a walk, resting on the way, hasten to go home, longing to untie the braids of their wives, when they hear a cloud's gentle and sweet thunder. I am this sort of a cloud, which obliges both the loving males and the loved females. ) 106.

इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कंठोच्छ्वसितहृदया वीक्ष्य संभाष्य चैव ।
श्रोष्यत्यस्मात् परमवहिता सौम्य सीमन्तिनीनां
कान्तोदन्तः सुहृदुपहृतः संगमात् किंचिदूनः ॥१०७॥

यक्षप्रियावर्णनं १९

हे मेघ, त्वया इत्याख्याते सति, मैथिली सीता पवनतनय हनूमन्त इव सा मत्प्रिया उत्कंठोच्छ्वसितहृदया उत्कण्ठया औत्सुक्येन उच्छ्वसित श्वासोच्छ्वासवन्ति प्राप्तं प्रच्छ्वसितं हृदयं यस्याः सा। अवहिता स्थिरचित्ता सावधाना त्वां वीक्ष्य अवलोक्य च संभाष्य जल्पयित्वा, उन्मुखी ऊर्ध्वमीवा सती अस्मात् वाक्यात् परपरं वाक्यं सन्देशलक्षण तत् श्रोष्यति आकर्णयिष्यति ।

हे सौम्य, सुहृदुपहृतः सुहृदा पतिमित्रेण उपहृतः आनीतः सीमन्तिनीनां नारीणां कान्तोदन्तः कान्तस्य उदन्तः भर्तृसंदेशः संगमात् भर्तृमेलापकात् किंचित् स्तोकमेव ऊनः न्यूनः भवति ॥ १०७ ॥

This being said, she, like Sita looking up to Hanuman, with heart enlivened by eagerness, seeing and speaking to you, will hear my message with rapt attention and face upwards. O gentle one, a message from a husband, brought by his friend, is in the esteem of ladies hardly less than actual union.

## DESCRIPTION OF THE YAKSHA'S WIFE 19

( O cloud, when yon will speak this much, she, with her heart palpitating in eagerness, will recollect herself, will look at you, will talk to you and will, with face uplifted, hear you speaking, in the same way as Sita did to Hanu man A message from the husband, brought by his friend, is, in the eyes of women, just slightly less than actual meeting ) 107

तामायुष्मन् मम च वचनादात्मना चोपकर्तुं
भूयादेवं तव सहचरो रामगिर्याश्रमस्थः ।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥ १०८ ॥

यक्षसंदेशः १

परोपकारबुद्ध्या स्वकार्यप्रवृत्तत्वेन तत्र साफल्यार्थं च आशीर्वादात्मक सम्बोधनेन सन्दिशन्नाह ।

हे आयुष्मन्, तस्याश्चोपकर्तुं आत्मना स्वयमेव मया यदुक्त यत्सदिष्ट तत्सर्वं मनसि अवधार्य स्वयप्रेरणया मम वचनात् मम वाक्येन भवान् एव ब्रूयात् ।

हे अबल, रामगिर्याश्रमस्थ अव्यापन्न जीवन् वियुक्त विरहित तव विरहेण विकल शापयन्त्रित भर्तुराज्ञया बद्ध तव सहचरो भर्ता त्वा कुशल पृच्छति ।

सुलभविपदा अतर्कितप्राप्तवियोगरूपापत्तीना, सुलभा अतर्किता अप लिपता विपद आगतविपत्तय येषा ते तेषा प्राणिना एतदेव कुशलवाक्यमेव कुशल समाचार एव पूर्वाभाष्य पूर्वाख्येय अस्ति प्रथम आभाषणाय एतत् कुशलप्रश्नरूप वचनमेव युक्तम् ॥ १०८ ॥

*O long-lived one, to oblige her by yoursell, you may speak to her in my name, your consort residing in a hermitage on Ramgiri, alive and separated from you, O weak one, inquires after your well-being; to creatures easily afflicted with calamities, this alone is the first thing to be spoken.*

## YAKSHA'S MESSAGE 1.

( In order that the cloud's mission, undertaken with a benevolent motive, be successful and there may not arise any obstacle, it is here blessed with the word 'Ayushman'. O long-lived one, to oblige my wife, you bear my message in mind and speak to her in my name as below :- "O Helpless one, your husband, living among the hermitages on *Mount* Ramgiri *near* Nasik, bound to live in exile at the behest of his master and separated from you is alive, hale and hearty. It is but proper that people, who are suddenly overpowered by adversities, should first be inquired after their well-being. ) 108.

अंगेनांगं प्रतनु तनुना गाढतप्तेन तप्तं
साम्रेणाश्रुद्रवमविरतोत्कण्ठमुत्कण्ठितेन ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
संकल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥ १०९ ॥

यक्षसन्देशः २

हे मेघ, भवान् तदनन्तर एवं ब्रूयात् यथाहि ।

हे अबले, दूरवर्ती विप्रकृष्टः वैरिणा शत्रुभूतेन विधिना दैवेन रुद्धमार्गः रुद्धपथः से तव सहचरः भर्ता तैः लोकप्रसिद्धैः संकल्पैः मनोरथैः मनोव्यापारैः अंगेन स्वशरीरेण अंगं तवांगं तव शरीरं विशति प्रविशति आलिंगति ।

कथंभूतेन तस्य शरीरेण कथमूतं तव शरीरं प्रविशति तच्छृणु ।

तनुना कृशेन तस्यांगेन, प्रतनु प्रकर्षेण तनु कृशं मंततं तवाङ्गं,

गाढतप्तेन महासंतप्तेन तस्य अंगेन, तप्तं संतप्तं तवांगं,

सास्रेण अस्रं अश्रु तत्सहितेन तस्य अंगेन, अश्रुद्रवं अश्रुक्षरणयुक्तं तवांगं, उत्कण्ठितेन उत्कंठायुक्तेन तस्य अंगेन, अविरतोत्कंठं अनवच्छिन्नोत्कंठं अविरता विरामरहिता उत्कंठा यस्मिंस्तत् तवाङ्गं,

समधिकतरोच्छ्वासिना सम् सम्यक् विशेषतया अत्यधिकाः उच्छ्वासाः ऊर्ध्वगतिकाः श्वासाः यस्मिंस्तत समधिकतरं उच्छ्वसतीत्येवंशीलं तेन तस्यांगेन, उष्णोच्छ्वासं अशिशिरनिःश्वासं तवाङ्गं,

इत्थंभूतेन तस्यांगेन, इत्थंभूत तवाङ्गं तव शरीरं तैः तैः संकल्पैः मनोरथैः स ते पतिः प्रविशति आलिंगति ॥ १०९ ॥

With those fanciful imaginations, he ( your husband ) residing far away with path obstructed by inimical fate unites his body thin, greatly heated, fearful, ardently longing and breathing hotly with your body, witch is also emaciated, heated, wet with tears, ceaselessly yearning and heaving hot.

YAKSHA'S MESSAGE 2.

( O cloud, then tell her, "Your husband, residing far away with path obstructed by cruel fate, enters your body with his body, to speak otherwise, embraces your body with fanciful imaginings Hear what sort of his body is joined with yours in which condition. His body emaciated, heated with pangs of separation, full of tears, ardently longing to meet you and breathing heavily is united ( embraces) with yours which too is thin, heated, tearful, excessively yearning and sighing hotly and deeply. ) 109.

शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।
सोतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृश्य-
स्त्वामुत्कंठाविरचितपदं मन्मुखेनेदमाह ॥ ११० ॥

यक्षसंदेशः ३

सखीनां पुरस्तात् यः ते तव भर्ता किलेति संभावनायां यदपि यद्यपि शब्दाख्येयं शब्देन उच्चारेण कथयितुं योग्यं वचः आननस्पर्शलोभात् मुखस्पर्श-चुम्बनादि तस्य लापट्यात् कर्णे कथयितुं लोलः लंपटः अभूत् आसीत् ।

सः श्रवणविषय अगोचरः कर्णगोचरं अतिक्रान्तः। तथैव लोचनाभ्यां नेत्राभ्यां अदृश्यः अनवलोकनीयः ते भर्ता उत्कंठाविरचितपदं यथा भवति अभिलापनिर्मितस्थानं यथा स्यात् तथा इदं अग्रे वक्ष्यमाणं मन्मुखेन त्वां आह वदति तच्छृणु ॥ ११० ॥

He, who out of passion for the touch of your face desired to whisper in your ear something which could have been uttered even before your female friends—now being bey-

ond the reach of your ear and not capable of being seen by the eyes—conveys to you through my mouth this message couched in passionate words.

YAKSHA'S MESSAGE 3

( Your Husband, who desiring to have the touch of your face, was going to tell in your ear something which could have been said aloud even in the presence of your female friends—now being unknown in whereabouts to your ear and also invisible to your eyes—conveys through me this message. Hear it now in his own words ) 110.

श्यामास्वंगं चकितहरिणीप्रेक्षिते दृष्टिपातान्
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्थं क्वचिदपि न ते भीरु सादृश्यमस्ति ॥ १११ ॥

यक्षसंदेशः ४

हे भीरु,

तव शरीरं श्यामासु चीनाकेषु, अति मृदुकोमलतया चीणो इति धान्यविशेषः तस्य अत्यंतमृदुकोमलमसृणत्वाच्च, उत्पश्यामि संभावयामि ।

ते तव दृष्टिपातान् दृष्टिविक्षेपान् चकितहरिणीप्रेक्षिते त्रस्तकुरंगीविलोके उत्पश्यामि ।

ते तव मुखच्छायां मुखशोभां शशिनि चन्द्रे उत्पश्यामि ।

ते तव केशान् अलककलापान् शिखिनां मयूराणां बर्हभारेषु पिच्छसमूहेषु उत्पश्यामि ।

ते तव विलासान् प्रतनुषु अत्यंतसूक्ष्मेषु नदीवीचिषु नदीतरंगेषु उत्पश्यामि ।

परं हे भीरु हन्तेति खेदे, ते तव सादृश्यं समानरूपतां एकस्थं एकस्थाने स्थितं क्वचिदपि नास्ति न दिग्यते न पश्यामि ॥ १११ ॥

I see your body in Priyangu creepers, your glances in the look of a startled female deer, the lustre of your face in the moon, your tresses in the clusters of feathers of Peacocks and the sporting of your eye-brows in the very small ripples

of the river. Alas ! O timid one ! there is no where resemblance to you existing in one place.

YAKSHA'S MESSAGE 4.

( O timid one, I see the softness of your body in the grains of Shyama, your eyesight in the eys of a frightened female deer, the beauty or the lustre of your face in the moon, the heaviness of your hair in the clusters of feathers of peacocks and your amorous sportings in the small ripples *of the rivers. But it is a sorry tale to tell that your softness,* eyesight, face–lustre, tresses and sportive movements are not to be seen by me anywhere in any one thing or a place. they are all to be seen in one you alone. ) 111.

धारासिक्तस्थलसुरभिणस्त्वन्मुखस्यास्य बाले
दूरीभूतं प्रतनुमपि मां पंचबाणः क्षिणोति ।
घर्मान्तेऽस्मिन् विगणय कथं वासराणि व्रजेयु-
र्दिक्संसक्तप्रविरलघनव्यस्तसूर्यातपानि ॥ ११२ ॥

यक्षसंदेशः ५

हे बाले अबले, धारासिक्तस्थलसुरभिणः धारया मदिराधारया सिक्तं यत् स्थलं पृथ्वीस्थलं तद्वत् अथवा धारया जलधारया छिद्रयन्त्रकारेण सिक्तं ग्रीष्मतापेन संतप्तं यत्पृथ्वीस्थलं तद्वत् सुरभिणः सुगन्धस्य अस्य त्वन्मुखस्य दूरीभूतं विप्रकृष्टं, प्रतनुमपि कृशमपि मां पंचबाणः कामः पीडयति क्षिणोति ।

तदा त्वमेव विगणय विचारय अस्मिन् घर्मान्ते घर्मावसाने वर्षाकाले दिक्संसक्तप्रविरलघनव्यस्तसूर्यातपानि दिक्षु संसक्ताः संलग्नाः प्रविरलाः पृथक् पृथक् भूताः ये विस्खलिताः घनाः मेघास्तैर्व्यस्ताः पश्चात्कृताः सूर्यातपो येषु तानि वासराणि दिनानि कथं व्रजेयुः गच्छेयुः ॥ ११२ ॥

O youthful woman, though I am emaciated and very far from your face bearing the fragrance of the earth besprinkled with showers, the five–arrowed God of Love afflicts me, rendering me more weak. Just imagine how at the end of the summer season, would the days pass, with their sunlight obstructed by clouds scattered in all directions

## YAKSHA'S MESSAGE 5.

( O young woman, I am at a very great distance from your face, bearing the fragrance as coming out of the heated earth sprinkled with water or earth wettened by wine Hence I am reduced in body Yet the God of Love pains me much rendering me more weak Just imagine how I might be passsing my days of separation in this rainy season, when the light of the sun is bedimmed by clouds scattered in all directions. ) *112.*

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतान्तः ॥ ११३ ॥

यक्षसंदेशः ६

हे चंडि, धातुरागैः हरिताल–गैरिक–सिन्दूरादिधातूनां पर्वतस्थैः रंगैः प्रणयकुपितां प्रीतिरुष्टां त्वां शिलायां दृषदि आलिख्य चित्रयित्वा आत्मानं ते तव चरणपतितं कर्तुं चित्रयितुं इच्छामि पादपतितं विधातु यावत् अभिलषामि तावत् मुहुः वारं वारं मे मम दृष्टिः उपचितैः वृद्धिगतैः अस्रैः रोदनजलैः आलुप्यते आच्छाद्यते ।

तस्मिन्नपि आलेख्ये चित्रेऽपि नौ आवयोः संगमं क्रूरः दयाहीनः शत्रुरूपः कृतांतः विधिः न सहते ॥ ११३ ॥

While I desire to make myself prostrate at your feet, after depicting you—angry with love—on a rock with mineral dyes, my eyesight is obstructed by tears accumulated again and again Cruel fate does not endure our union even there.

## YAKSHA'S MESSAGE 6.

( O one angry in love, I paint your picture on a slab with mineral dyes, whereafter to please you I try to depict my own picture as lying prostrate at your feet; but my eyes get bedimmed at that time by gathered up tears, rendering

the task of painting impossible. Merciless fate does not tolerate our union even in a picture. ) 113

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेषु ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ ११४ ॥

यक्षसंदेशः ७

हे अबले, कथमपि कष्टेन दैववशात् स्वप्नसंदर्शनेषु स्वप्नावलोकनेषु मया लब्धायाः प्राप्तायास्ते तव निर्दयाश्लेषहेतोः गाढालिङ्गननिमित्तं आकाशप्रणिहितभुजं आकाशे शून्ये प्रणिहितौ भुजौ करौ येन सः तं माम्, पश्यन्तीनां अनेकवारं पश्यन्तीनां स्थलीदेवतानां वनस्थलदेवतानां मुक्तास्थूलाः मौक्तिकसमस्थूलाः बहुशः अश्रुलेशाः रोदनलक्षणाः अश्रुबिन्दवः तरुकिसलयेषु द्रुमपल्लवेषु खलु इति निश्चयेन न पतन्ति न, पतन्त्येव । अर्थात् स्वप्ने त्वां आलिङ्गितुं आकाशे शून्यप्रदेशे मया दीर्घीकृतयोः भुजयोः आलिङ्गने नैष्फल्यं निरीक्ष्य वन देवता अपि दयया अश्रुबिन्दून् मुञ्चति इव तरूणां किसलयेषु स्थिताः पुनस्तेभ्यः पतन्तः बिन्दवः निरीक्ष्यन्ते ॥ ११४ ॥

Drops of tears as big as pearls, of sylvan deities, who see me *stretching out my arms in the sky for a close embrace* of you, obtained by me with great difficulty in the vision of a dream, indeed fall so often on the shoots of trees.

YAKSHA'S MESSAGE 7

( O weak one, *seeing* me so foten stretching my arms in the sky to closely embrace you, obtained by me *with* great difficulty in a dream, it is not that the forest deities do not abundantly shed tears as large as pearls on the tree shoots. They really do so To state otherwise, when I stretch my arms to embrace you in a dream, I meet with failure Seeing this plight of mine, the sylvan deities pity me and sympathise with me by shedding tears. Then I get myself suddenly awakened and see in the morning drops of water falling or fallen on tree shoots. ) 114

भित्त्वा सद्यः किसलयपुटान् देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदंगमेभिस्तवेति ॥ ११५ ॥

यक्षसंदेशः ८

हे गुणवति गुणालंकृतशरीरे, सद्यः तत्क्षणं देवदारुद्रुमाणां किसलयपुटान् पल्लवसपुटान् भित्त्वा विकास्य तत्क्षीरस्रुतिसुरभयः तेषां देवदारुद्रुमाणां यत्क्षीरं दुग्धं तस्य स्रुतिः क्षरणं तेन सुरभयः सुगन्धिताः दक्षिणेन दक्षिणस्यां दिशि प्रवृत्ताः तुषाराद्रिवाताः तुषाराः ज्लकणाः तैर्युक्ता स्पृष्टाः अद्रिः हिमाचलः तस्य वाताः हिमगिरिपवनाः मया आलिङ्ग्यन्ते । यदि एभिर्वातैः किल अवश्यं पूर्वं प्रथमं तवांगं तव शरीरं स्पृष्टं भवेत् इति निश्चित्य मत्वा ॥ ११५ ॥

O virtuous one, those breezes of the snow-mountain, which breaking open straightway the sprouting shoots of pine trees and fragrant with the flow of their juice, blow southwards, are embraced by me; thinking that your body might have been verily touched by them previously.

YAKSHA'S MESSAGE 8.

( O meritorious wife, I embrace the breezes from the Himalayas, which cause tender sprouts of the pine trees to bloom and which laden with the fragrance of juice exuding from them blow southwards. I do this under an impression that those winds have indeed touched your body previously.) 115.

संक्षिप्येत क्षणमिव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥११६॥

यक्षसंदेशः ९

हे चटुलनयने चटुलानि चंचले नयने लोचने यस्याः सा तत्सम्बोधने।

दीर्घया मा दीर्घाः विशालाः यामाः प्रहराः यस्याः सा त्रियामा रात्रिः सर्वावस्थासु आदिमध्यांतेषु क्षणं इव कथं संक्षिप्येत लघूभवेत् ।

अहः अपि दिवसोपि सर्वावस्थासु पूर्वाह्ण-मध्याह्न-पराह्ण-लक्षणासु मन्दमन्दातपं मन्दः प्रस्तोकः आतपः यत्र तत् कथं स्यात् । इत्थ इति दुर्लभप्रार्थनं दुर्लभा अशक्या प्रार्थना यस्य तत् मे मम चेतः गाढोष्माभिः महोष्णाभिः त्वद्वियोगव्यथाभिः तव वियोगजन्यपीडाभिः अशरणं कृतं शरणरहितं निराधारं आश्रयहीनं पराधीनं कृत विहितमास्त ॥ ११६ ॥

How can the night long hours be reduced to a moment as it were. ? How can the day too have its heat lessened in all its stages. ? O unsteady-eyed one, my mind, thus indulging in hopes difficult to accomplish, is rendered helpless by pangs of separation from you, full of intense heat.

## YAKSHA'S MESSAGE 9.

( O quick-eyd one, how can the night with its long hours-its first part, the middle and the after part-be passed as if like a moment. ? How can the day in all its parts—morning, noon, afternoon and evening—have its heat lessened. ! In short, how can the day and night be passed soon and the period of our separation may be brought to a speedy end. ? My mind, obsessed with such impossible longings, is rendered helpless by intensely hot pain due to your separation. ) 116.

इत्यात्मानं बहु विगणयन्नात्मनैवावलम्बे
तत्कल्याणि त्वमपि सुतरां मा गमः कातरत्वम् ।
कस्यात्यंतं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ११७ ॥

यक्षसंदेशः १०

हे कल्याणि, कस्य अत्यन्तं नैरन्तर्येण सुखं उपनतं उपस्थितं, कस्य वा एकान्ततः सततं दुःखं उपनतं, न कस्यापि इति एवं प्रकारेण आश्वासनेन बहु यथा स्यात्तथा विगणयन् विचारयन् आत्मानं हृदयं आत्मना एव मनसा एव अवलम्बे धारयामि। मनुष्याणां दशा सुखदुःखरूपा अवस्था नीचैः च उपरि च

चक्रनेमिक्रमेण गच्छति। चक्रस्य नेमिः वंटडो इति सौराष्ट्रे चक्रस्याराक्रमेण कदाचित् चक्रस्यारा नीचैः अधस्ताद् गच्छति पुनः सच एव उपरि उपरिष्टाद् गच्छति याति। तथा सुखदुःखस्यापि अवस्था कालक्रमेण अध उपरिगामिनी भवति, कदाचित् सुखरूपा कदाचिद् दुःखरूपा। तत् तस्मात् कारणात् हे कल्याणि शोभनावयवे, त्वमपि सुतरां अतिशयेन कातरत्व अधीरत्व मा गमः मा यासीः ॥ ११७॥

Thinking much in this way, I support myself by myself. Hence, O blessed one, you too should not be extremely impatient. For who enjoys unceasing happiness or suffers perpetual misery. ? One ' s condition of life goes up and down like the revolution of a wheel

## YAKSHA'S MESSAGE 10

( But O fortunate one, who obtains happiness for the whole life ? Or who suffers from perpetual misery. ? No one meets with this sort of life. Thinking so, I console myself and keep up my spirits Happiness and misery come and go in the life of a man like the felly of a moving wheel. Hence, O dear one, you too should think like this, without being impatient. ) 117.

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान्मासान् गमय चतुरो लोचने मीलयित्वा।
पश्चादावां विरहगणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चंद्रिकासु क्षपासु ॥ ११७॥

### यक्षसन्देशः ११

हे कल्याणि, शार्ङ्गपाणौ शार्ङ्गं धनुः पाणौ हस्ते यस्य सः तस्मिन् विष्णौ भुजगशयनात् शेषपर्यंकात् उत्थिते जागरिते सति मे शापान्तः मम शापस्य देशाद् बहिर्निष्कासनाज्ञाया वर्षैकपरिमिताया: अतः पूर्णता भविष्यति यतः कारणात् शेषान् चतुःसंख्याकान् मासान् लोचने मीलयित्वा नेत्रे निमील्य गमयेः अतिवाहयेः। विक्रमसंवदनुसारं आषाढशुक्लैकादश्यां विष्णु शेषशय्यायां स्वपिति पुनः चातुर्मास्यानन्तरं कार्तिकशुक्लैकादश्यां देवदीपोत्सवोदिने देवदिवाळी इति सौराष्ट्रे तस्मिन्दिने विष्णुरुत्तिष्ठति।

पश्चात् स्वस्थानागमनानन्तर आवा त्व च अह् च द्वावपि विरहगणित विरहकाले सकल्पित त त आत्माभिलाप भोगविलासस्य निजमनोरथ परिणत-शरच्चन्द्रिकासु परिणता सपूर्णता गता शरद् ऋतु तस्या चन्द्रिका यासु ता तासु क्षपासु रात्रिषु कार्तिकशुक्लद्वादश्यनन्तर हेमन्तर्तो प्रारभात् निर्मल-चन्द्रिकाप्रकाशितासु रात्रिषु निर्वेदयात्र उपभोक्ष्यावहे विविधविलाससुखाभिला-षपूर्ति करिष्यावहे ॥ ११८ ॥

My curse will end when Vishnu, the wielder of Sarang bow, gets up from his serpent-bed Pass away the remaining four months, keeping your eyes closed Thereafter, we two shall satisfy during nights full of autumnal moonlight, those self-same desires of ours entertained in separation

YAKSHA'S MESSAGE 11

( O blessed one, my curse of exile for a year will come to an end on the eleventh day of the bright half of Kartik, when Vishnu will rise from his bed on Sheshnag Hence you should pass the remaining four months, keeping your eyes closed Thereafter we shall enjoy in bright moonlight, cloudless on account of the end of Autumn, those various desires, thought of during separation ) 118

भूयश्चाहं त्वमपि शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वरं विप्रबुद्धा ।
सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे
दृष्टः स्वप्ने कितव रमयन् कामपि त्वं मयेति ॥ ११९ ॥

यक्षसन्देशः १२

अथ स्वामिप्रयुक्त एव मेघ इति विश्वासोत्पादनार्थं प्राक्तन रहस्यमय वृत्तान्त निवेदयन्नाह ।

हे कल्याणि, भूय पुनरपि शृणु । पुरा पूर्वं एकदा शयने शय्यायां मे कण्ठ-लग्ना सती निद्रा गत्वा निद्रा प्राप्य सुप्तासीत् । पुन किमपि केनापि अविज्ञा-तेन कारणेन रुदती रुदती सस्वर शीघ्र एव विप्रबुद्धा जागरिता । तदा असकृत् वार वार पृच्छत मे मम त्वया सान्तर्हास अन्तर्हसितमयुक्त कथित । हे कितव, धूर्त ! कामपि प्रमदा रमयन् क्रीडयन् त्व स्वप्ने मया दृष्ट । सपत्नीदुःखादह रोदिमि ॥ ११६ ॥

To add to it further, — Once clinging to my neck on the bed and having gone to sleep, you awoke suddenly crying for reason unknown To me asking repeatedly, you said with an inward smile, "O deceiver, you were seen by me in a dream sporting with some other woman."

YAKSHA'S MESSAGE 12.

( To convince his wife that the cloud is none else but one sent by her husband, the Yaksha described one incident known only to himself :—

O blessed one, hear again Once in the past you had clung to my neck and gone to sleep Some time after you awoke suddenly and began to weep without any reason whatsoever When I asked you repeatedly the reason for it, you said to me smiling inwardly, "O rogue, I am weeping because I saw you in my dream sporting with some other woman. ) 119.

एतस्मान्मां कुशलिनमभिज्ञानदानाद् विदित्वा
मा कौलीन्यादसितनयने मय्यविश्वासिनी भूः ।
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवंति ॥ १२० ॥

यक्षसन्देशः १३

हे असितलोचने मेचकलोचने, त्वं एतस्मात् अभिज्ञानदानात् अभिज्ञानानि विश्वासोत्पादकानि चिह्नानि तेषां दानात् मां कुशलिनं जीवन्तं कस्यांचिदपि च न लुब्धं विदित्वा ज्ञात्वा परिज्ञाय कौलीन्यात् लोकवादात् पत्नीवियोगेन मृत एव सम्भवत्ययं, एनां न स्मरन्नेवान्यस्यां कस्यांचिल्लुब्धतया लुब्धस्य तस्य पुनरागमनमसम्भवमित्यादिना लोकानां वादेन प्रवादेन लोकानां कियदन्यथा मयि सम्बन्धे अविश्वासिनी मा भूः मरणान्यलुब्धत्वादिशंकाकुला न भव ।

विरहे परस्परवियोगे सति स्नेहान् ध्वंसिनः विनाशकारिणः प्राहुः कथयन्ति तत् किमपि केषुचिद् दृष्टान्तेषु सत्यं चेत् तथापि बहुधा तु ते स्नेहाः हि इति निश्चयेन इष्टे वस्तुनि अभीष्टे पदार्थे अभोगात् अप्राप्तिवशात् भोगविरहितत्वेन

उपचितरसाः सन्तः कस्मिंश्चिन्मनुष्ये वस्तुनि वा प्रेमराशीभवन्ति स्नेहसमूहीभवन्ति ॥ १२० ॥

O black eyed one, knowing me to be well from the presentation of this token, do not be distrustful about me from popular rumour, They say that love vanishes during separation ; but ( I assert ) that affection becomes accumulated as the desire for the object loved becomes increased in intensity owing to non–enjnyment.

YAKSHA'S MESSAGE 13.

( O black eyed one, from the tokens given, you will be convinced that I am alive and am not attached to any other woman. Do not, from popular rumour, entertain any doubt about me that I might be dead owing to separation from my wife or that there isno possibility of my return,fallen in love as I have with other woman. Some people opine that love dies in separation; but I believe that love becomes accumulated, when circumstances for its non–enjoyment arise. Advantage of this accumulated love is,well availed of, when both the lovers meet again or reunite. ) 120

आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं तां
शैलादाशु त्रिनयनवृषोत्खातशृंगान्निवृत्तः ।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥ १२१ ॥

मेघं प्रति चरमवचनं १

हे मेघ, तां प्रथमविरहोदग्रशोकां प्रथम एव पूर्वं कदाप्यननुभूतः प्रथमतारमेवाकस्मादापतितः विरहः वियोगः तेन जातः उदग्रः असह्यः शोकः यस्यास्तां तव सखीं भ्रातृजायां, एवं पूर्वोक्तप्रकारेण आश्वास्य स्वस्थीकृत्य त्रिनयनवृषोत्खातशृंगात् त्रिनयनः शंकरः तस्य वृषः वृषभः नन्दी तेन उत्खातानि उत्पाटितानि शृंगाणि शिखराणि यस्य सः तस्मात् ईदृशात् शैलात् कैलाशात् आशु शीघ्रं निवृत्तः प्रत्यागतः सन् पश्चात् साभिज्ञानप्रहितकुशलैः अभिज्ञान विश्वासोत्पादकसंकेतः तेन संयुक्तं यथा स्यात्तथा तथा प्रहितैः प्रेषितैः कुशलैः कुशल-

धार्तायुक्तै तद्वचोभि तस्या सन्देशवाक्यै सह प्रात कुन्दप्रसवशिथिल प्रात प्रभाते कुन्दप्रसव डोलरकुसुम पुष्प तद्वत् शिथिल क्षीणतेजस्क मम जीवित धारयेथा । यथा तस्या जीवित मत्सन्देशेन त्वया रक्षित तथा ममापि जीवित धारयेथा अवलम्बेथा रक्षस्व ॥ १२१ ॥

Having thus comforted your friend intensely sorrowful at first separation and having returned immediately from that mountain, the peaks of which have been dug up by the three-eyed God Shiva's bull, you do support my life also, as frail as a Kunda flower in the morning, by her words, intimating her well-being by tokens sent

LAST WORDS TO THE CLOUD 1

( O cloud, having thus consoled your friend who is overpowered with great sorrow on account of first separatio, not experienced before and having returned here at once from that mount Kailas the peaks of which are dug up by Shiva' s bull, you have to save my life also, as fickle as a Kunda flower withering in the morning, by her words of welfare accompanied with tokens ) 121

कच्चित् सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्याख्यातुं न खलु भवतो धीरता तर्कयामि ।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ १२२ ॥

हे सौम्य हे सुन्दरदर्शन, त्वया मे मम इद बन्धुकृत्य स्वजनकार्य स्वमित्र कार्य व्यवसित अङ्गीकृत करिष्यामीति निश्चित कच्चित् । भवत तव धीरता निर्वचनता प्रत्याख्यातु निराकर्तु न करिष्यामीति वक्तु खलु अवश्य न तर्कयामि न कल्पयामि ।

अथवा भवत धीरता निर्वचनता प्रत्याख्यातु प्रत्युत्तरयितु न कल्पयामि नाशासे । विना तव प्रतिवचनेन उत्तरेणापि त्वया मित्रस्य मम कार्य स्वीकृत मिति मन्ये ।

हि यस्मात् कारणात् नि शब्दोऽपि शब्दरहितोऽपि शब्दमकुर्वाणोऽपि त्व याचित प्रार्थित सन् चातकेभ्य जल प्रदिशसि ददासि ।

हि एतस्मात् कारणात् अह एव मन्ये यत् सता त्वादृशां परोपकारिणा महामना प्रणयिषु प्रीतिमत्सु मित्रेषु सेवकेषु आप्तेषु याचके विषये च ईप्सितार्थस्यैव अभिलषितार्थनिष्पादनमेव प्रत्युक्त प्रत्युत्तरमस्ति ॥ १२२ ॥

O gentle one, has it been resolved by you to transact this friendly work of mine ? I do not indeed take your silence to imply a flouting ( of my request ) Even though speech less, you give water to the Chatakas when asked for it The doing of a desired act is itself a reply of the good persons to those who offer a request

LAST WORDS TO THE CLOUD 2

( O delight-giving cloud, did you decide to execute this friendly work of mine ? Because you do not give the reply, I do not suppose that you do not wish to transact it In other words, I do not expect a reply from you I take it up that your silence implies consent to transact your friend's work. The reason is that you remain silent and still supply water to the Chataks, who long for it I believe that benevolent persons like you, who evince affection for their friends, do not reply to their requests by words Such good persons really bring to a successful end the desired works of their supplicants To state otherwise, great porsons do not give promise in words alone That they do the work is a reply by itself They are by nature inclined to help in fulfilling the cherished desires of their supplicants The cloud roars in autumn but does not rain, whereas in monsoon it rains but does not roar Likewise, a low person speaks much but does nothing of it, while a good person speaks nothing but does the work Actually to execute the work is a reply by itself of the good persons ) 122

एतत्कृत्वा प्रियमनुचितप्रार्थनावर्तिनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।

इष्टान् देशान्विचर जलद प्रावृषा संभृतश्री-
र्मा भूदेवं क्षणमपि च ते विद्युता विप्रयोगः ॥ १२३ ॥

मेघं प्रति चरमवचनं ३

हे मेघ, अनुचितप्रार्थनावर्त्मनः न विद्यते उचित योग्य त्वदनुरूपं प्रार्थनावर्त्म प्रार्थनामार्गः यस्य तस्य मे मम एतत् प्रियं इदं इष्टकार्यं सौहार्दात् मित्रभावात्, अथवा मयि अनुक्रोशबुद्धया दयालुत्वेन, अथवा अयं विधुरः विह्वलः दीनः दुःखितः इति कारणाद्वा मम एतत् पूर्वोक्तसन्देशकारणरूपं प्रियं कार्यं कृत्वा पश्चात् प्रावृषा वर्षाकालेन ऋतुना सम्भृतश्रीः पुष्टाकृतिः पुष्टकायकान्तिः सन् इष्टान् अभीष्टान् वाञ्छितान् देशान् स्थानानि विचर याहि। च ते तव एव यथा मम स्त्रिया वियोगो जातस्तथा तव विद्युता सौदामिन्या सह विप्रयोगः वियोगः क्षणमपि मा भूत् न स्यात् ॥ १२३ ॥

Having done this good to me, whose way of request be not proper, through friendship or out of a feeling of pity for me as I am separated from my wife, O cloud, you roam over any regions you like, being replenished with splendour by the rainy season May there never be your separation from lightning in this way even for a moment

LAST WORDS TO THE CLOUD. 3

(O friend, my way to entrust this work to you is not proper A saintly one like you should not be given such work. still you do my work out of friendship or through a feeling of compassion for me, as I am miserable. Thereafter you can go to any region you like, increased in glory by the rainy season I wish that you should never suffer separation from your wife—the lightning—even for a moment, in the same way as I had to suffer.) 123

तस्मादद्रेर्निगदिततया शीघ्रमेत्यालकायां
यक्षागारं विगलितशुचा पूर्वचिह्नैर्विदित्वा ।
यत्सन्दिष्टं प्रणयमधुरं गुह्यकेन प्रयत्नात्
तद्गेहिन्याः सकलमवदत् कामरूपी पयोदः ॥ १२४ ॥

## मेघप्रयाणं सन्देशदानं

कामरूपी इच्छितरूपधारणकुशलः पयोदः मेघः तस्मात् रामगिरेः अद्रेः पर्वतात् शीघ्रं यथा भवति तथा अलकायां एत्य आगत्य विगलितशुचा सन्देशप्रेषणोत्थानानन्देन मेघप्रयाणेन च विगलितः निवृत्तः शोको यस्यासौ तेन, विगलितशुचा गतशोकेन गुह्यकेन यक्षेण निगदिततया उक्ततया पूर्वचिह्नैः प्रथमकथितलक्षणैः यक्षागारं यक्षगेहं विदित्वा ज्ञात्वा, प्रयत्नात् आदरतः प्रणयमधुरं विनयमनोज्ञं यत् सन्दिष्टं तत् सकलं समग्रं तद्गेहिन्याः यक्षभार्यायाः अवदत् कथयामास ॥ १२४ ॥

Having come to Alaka at once from that mount (Ramgiri) and having recognised the Yaksha's house by signs given by him, deprived of sorrow, the cloud, capable to assume any shape, told his wife everything, which was imparted by the Yaksha as a message, sweet with love and with great effort.

### THE DEPARTURE OF THE CLOUD AND THE DELIVERY OF THE MESSAGE

(The cloud, who was able to assume any form at will came at once from mount Ramgiri to Alakapuri; recognised the Yaksha's House from signs given by him and related to the Yaksha's wife in words sweet and soothing all that was told by the Yaksha with love, difficulty and sorrow lessened at the departure of the Cloud.) 124.

तं सन्देशं जलधरवरो दिव्यवाचाऽऽचचक्षे
प्राणांस्तस्या जनहितरतो रक्षितुं यक्षवध्वाः ।
प्राप्योदन्तं प्रमुदितमनाः सापि तस्थौ स्वभर्तुः
केषां न स्यादभिमतफला प्रार्थना ह्युत्तमेषु ॥ १२५ ॥

### यक्षवध्वाः कुबेरस्य च संदेशदानं

गुह्यकथितं तं संदेशं जनहितरतः जनानां लोकानां हितकरणे रतः प्रीतियुक्तः आसक्तः जलधरवरः मेघश्रेष्ठ तस्याः यक्षवध्वाः प्राणान् रक्षितु पालयितुं दिव्यवाचा दिव्यवाण्या प्रधानवाण्या यक्षपत्न्यै धनदाय च आचचक्षे कथयामास अकथयत् ।

सापि यक्षवधूरपि स्वभर्तुः निजवल्लभस्य उदन्तं सन्देशं प्राप्य श्रुत्वा प्रमुदितमनाः हृष्टचित्ता तस्थौ बभूव ।

हि यस्मात् कारणात् उत्तमेषु सज्जनेषु पुरुषेषु कृता प्रार्थना प्रयुक्ता याच्ञा केषां पुरुषाणां अभिमतफला न स्यात् अभीष्टफलदायिनी न स्यात् अपि तु उत्तमेषु कृता प्रार्थना सर्वेषामेव इष्टफलप्रदा भवेदेव ॥ १२५ ॥

To preserve the life of that Yaksha's wife, the best of the cloud, engaged in doing good to the people, delivered that message in speech divine. She too, on receiving the message from her husband, became greatly pleased in mind. Whose request to the best of persons does not bear the desired fruit?

## THE MESSAGE WAS DELIVERED TO THE YAKSHA'S WIFE AND KUBERA.

( The cloud, loving to do good to the people, imparted that Yaksha's message with speech divine to Kubera and the Yaksha's wife, so as to save the latter's life The Yaksha's wife, on her part, was wild with joy on receiving the message from her husband. Request of all to noblest of persons always bears the desired fruit. ) 125.

श्रुत्वा वार्तां जलदकथितां तां धनेशोपि सद्यः
शापस्यान्तं सदयहृदयः संविधायास्तकोपः ।
संयोज्यैतौ विगलितशुचौ दम्पती हृष्टचित्तौ
भोगानिष्टानविरतसुखं भोजयामास शश्वत् ॥ १२६ ॥

### देशपाराज्ञानिवृत्तिः

जलदकथितां यक्षेण सन्दिष्टां तां पूर्वोक्तां वार्तां श्रुत्वा निशम्य, सदयहृदयः दयया सहित हृदयं यस्य सः, तेन अस्तकोपः अस्तः निवृत्तः अस्तङ्गतः कोपः यस्य सः, धनेशः कुबेरोपि सद्यः शीघ्रं शापस्यान्तं विधाय शापस्य वर्षावधि-वियोगलक्षणस्य देशपारकरणरूपिण्या आज्ञायाः अन्तं विरामं पूर्णतां संविधाय अवशिष्टान् चतुरो मासान् क्षमाप्य तौ दम्पती जायावल्लभौ संयोज्य एकत्र मेलयित्वा एतौ विगलितशुचौ स्फेटितशोकौ हृष्टमानसौ कृत्वा, इष्टान् मनो-

वांछितान् भोगान् अविरतसुखं अनवच्छिन्न अखण्डं अविरामं शश्वत् निरन्तरं सुखं भोजयामास ॥ १२६ ॥

Hearing that story told by the cloud, the Lord of the wealth also, with anger removed and heart compassionate, brought to an end the curse, united to gether that couple, sorrowless and delighted and made them enjoy for ever the unceasing happiness and pleasures at will.

PUNISHMENT OF EXILE WAS PARDONED.

( Kubera's heart was filled with pity, when he heard the Yaksha's message, as related by the cloud. Thereat, his anger was gone, the curse was ended and four months of exile that were yet to be passed were condoned He brought about the reunion of the Yaksha and his wife, granting them all facilities to enjoy a life, blessed with pleasures at will. ) 126.

इत्थम्भूतं सुचरितपदं मेघदूताभिधानं
कामक्रीडाविरहितजने दुःखयुक्ते विनोदः ।
कामं चास्मिन् मतिनिपुणतानन्यभावः कवीनां
नत्वाऽऽर्यायाश्चरणकमलं कालिदासश्चकार ॥ १२७ ॥

स्वकाव्यविवरणपूर्वकं समाप्तिमङ्गलं

कालिदासः कवि', आर्यायाः भगवत्याः पार्वत्याः चरणकमलं नत्वा प्रणम्य इत्थम्भूत एतादृशप्रकारेण रचित सुचरितपदं सु सुष्ठु उत्तमपात्रयोः चरितं तद्वर्णनात्मकानि पदानि विरचनानि श्लोकाः यस्मिन् तत् मेघदूताभिधानं काव्यं चकार ।

अस्मिन् काव्ये, दु खयुक्ते कामक्रीडाविरहितजने मदनकेलिविरहितपुरुषे विनोदः आनन्दः भवति । अस्मिन्काव्ये कवीना मतिनिपुणतानन्यभाव मतेः बुद्धेः निपुणतायाः अनन्यभावः परीक्षण बुद्धिचातुर्यं च भवति ॥ १२७ ॥

इति श्री कविकुलतिलकश्रीमत् कालिदासकृत मेघदूताभिधानं
महाकाव्यं सम्पूर्णं इति इति सम्पूर्णं ॥ संवत् १७१४ वर्षे
लिखितं ॥ श्रीरस्तु ॥ श्री ॥



Kalidas, having bowed to the lotus-like feet of the Goddess, composed a poem entitled the Meghdoota, of this sort and with the best of words and characters. In this poem, there is entertainment provided for a person rendered unhappy by being deprived of love-sports and a test for skill and versatility of poets.

## EPILOGUE

( Poet Kalidas, having bowed to the feet of Goddess Parvati, composed as outlined a poem entitled the Meghdoota, containing verses finely worded and describing the best of characters This poem will afford pleasure to persons, who are miserable on account of separation from their wives and hence not in a position to enjoy the pleasures of love-sports It will also serve as a test of the skill and versatility of poets. ) 127.

इति श्री कविकुलतिलकशिरोमणि कालिदासकृतं मेघदूताभिधानं
महाकाव्यं सम्पूर्णं इति इति सम्पूर्णं ॥ संवत् १७१४ वर्षे
लिखितं ॥ श्रीरस्तु ॥ श्रीः ॥

---

## INTERPOLATED THREE VERSES

The three verses given below have been seen as an appendix in one printed edition of the Meghdoota. Their meaning and purport are the same as those expressed in verses 96, 98 and others of this poem, and in a better way. Hence to accept them will merely be a repetition of what has been already told. Moreover their style of composition is not of a high order. As such, I am of the opinion to regard them spurious They only repeat what has already gone by. I give them here with commentary simply for the knowledge of readers. In truth, these three verses are not of Kalidas' composition Had these verses contained

some matter new, I would not have regarded them spurious and would have come to some definite decision about them after searching for them and collating in other manuscripts; but as they contain nothing new or peculiar, I am inclined to believe them as composed in pleasure by some other poet on the line same as Kalidas has followed.

इत्याख्याते सुरपतिसखः शैलकुल्यापुरीषु
स्थित्वा स्थित्वा धनपतिपुरीं वासरैः कैश्चिदाप ।
गत्वागारं कनकरुचिरं लक्षणैः पूर्वमुक्तै-
स्तस्योत्सङ्गे क्षितितलगतां तां च दीनां ददर्श ॥ १ ॥

इति इत्थ आख्याते यक्षेण उक्ते सति सुरपतिसखः इन्द्रमित्रः मेघ : शैलकुल्यापुरीषु शैलाः पर्वता. कुल्याः नद्यः पुर्यः नगर्यः इत्यादिषु स्थि त्वा स्थित्वा विश्रम्य कैश्चित् अल्पैः वासरै दिनै. धनपतिपुरीं अलकापुरीं आप प्राप।

कनकरुचिर सुवर्णादिवस्तुभिः सुशोभित, पूर्वं यक्षेण उक्तैः प्रोक्तै लक्षणैः आगार गृहं गत्वा तस्य गृहस्य उत्सङ्गे तलप्रदेशे क्षितितलगतां भूमिशय्यायां सुप्तां दीना दयापात्रां तां यक्षपत्नीं ददश अवलोकयामास ॥ १ ॥

Having been thus told, Indra's friend, resting awhile on mountains, rivers and towns, arrived at the city of the Lord of Wealth after some days. Having gone to that house bright like gold and recognising it from aforesaid signs, he saw the miserable woman in its interior, *lying on the ground.*

( *The Yaksha's speech being thus finished,* Indra's friend the Cloud, resting on mountains, rivers and cities, reached Kubera's Alakapuri after some days Here he came to the Yaksha's house, recognising it from signs given and adorned with golden buntings and other embelishments. *He* saw in the Yaksha's house *his miserable wife, lying* in a pitiable condition, with her bed spread upon the floor of the house. ) 1.

स्निग्धाः सख्यः क्षणमपि दिवा तां न मोक्ष्यन्ति तन्वी-
मेकप्रख्या भवति हि जगत्यङ्गनानां प्रवृत्तिः।
स त्वं रात्रौ जलद शयनासन्नवातायनस्थः
कान्तां सुप्ते सति परिजने वीतनिद्रामुपेयाः ॥ २ ॥

हे मेघ, स्निग्धा स्नेहपरवशाः तस्याः सख्यः, तन्वीं सुकोमलशरीरां तां दिवा क्षणं अपि न मोक्ष्यन्ति न मुञ्चन्ति। जगति विश्वे पते· संयोगवियोगादिषु अङ्गनानां स्त्रीणां प्रवृत्तिः दशा एकप्रख्या एकप्रकारा हि प्रायः भवति सर्वासां स्त्रीणां स्वभावो मानसं चित्तस्थितिस्तु प्रायः समाना एवास्ति। अर्थात् दिवसे तु सखीनामुपस्थितौ लज्जया सन्देशदानादानावकाशो न मिलिष्यति।

अतः हे जलद स त्वं रात्रौ परिजने अनुचरजने सुप्ते सति शयनासन्नवातायनस्थः सन् भूमिशयननिकटवर्तिगवाक्षोपर्युपविष्टः सन् वीतनिद्रां कान्तां जागरितां उपेयाः गच्छेः ॥ २ ॥

Affectionate friends do not leave alone that tender-bodied one even for a moment by day. The ways of women are the same or uniform all throughout the world. Hence, O cloud, you, resting on the window near her bed, should approach my wife, devoid of sleep, at night, when all attendants are asleep.

(*O cloud, my wife's affectionate friends do not leave her — the tender-bodied one — alone even for a moment by day. So you have not to impart my message in the presence of her friends, because women are always bashful by nature. Women's ways are uniform throughout the world. Hence, O friend, at night when all the servants are asleep, you, sitting on the window near her bed on the ground, should deliver my message to her, when she awakes during the night.*) 2.

अन्वेष्टव्यामवनिशयने सन्निकीर्णैकपार्श्वां
तत्पर्यंकप्रगलितलवैश्छिन्नहारैरिवास्रैः ॥
भूयो भूयः कठिनविषमां सारयन्तीं कपोला-
दामोक्तव्यामयमितनखेनैकवेणीं करेण ॥ ३ ॥

हे मेघ, सन्निकीर्णैकपार्श्वां सम् सम्यक नितान्त निकीर्ण सकुचित एक पार्श्व यया सा ता। छिन्नहारै इव त्रुटितहाराणा रत्नकणिका इव तत्पर्यंक प्रगलितलवै तस्या पर्यंक पलग तस्मात् प्रगलिता स्रवन्त लवा बिन्दव येषा तै अस्रै अश्रुभि युक्ता कठिना जटीं जटिला विषमा स्पर्शासहा आमोक्तव्या मम हस्ताभ्या पृथक समीचीना करणीया ईदृशीं एकवेणीं अयमितनखेन अयमिता अकर्तिता नखा यस्मिन् स तेन करेण कपोलात् भूयो भूय पुन पुन सारयन्तीं दूरीकुर्वतीं त्व द्रक्ष्यसि ॥ ३ ॥

( You would see her ), who is to be found out, sleeping sidewise on her bed on the floor, shedding tears *falling down from her bed like pearls dropping out* from the garland and waving aside again and again from her cheek the single braid of hair, — rough, uncouth and worthy of being loosened by me, — by her hand, with nails unimpaired

( O cloud, you will find her your friend sleeping with twined legs on one side on her bed on the ground, shedding tears from her eyes dropping down like pea rls from the garland from the bed, and casting aside off and on from the cheek her braid of hair— hard and painful to touch and which is to be untied and combed only when I meet her—by her hand with nails uncut ) 3



# हस्तलिखित-पुस्तकानां संकेतः

क १ संकेत–आदर्श पुस्तकं विक्रम संवत् १७१४ वर्षे लिखित मूलेन सह टीकास्ति। टीकाया नाम न विद्यते। परं केनचिद् गुर्जरेण कृतेति ज्ञायते अस्मिन् १२७ श्लोकाः सन्ति। पत्राणि २५ मितानि।

ख २ संकेत–संवत् १५१७ प्राय। केवला मल्लिनाथी संजीवनी नाम्नी टीका। श्लोकसंख्या १२१। पत्राणि २८।

ग ३ संकेत–संवत् १६१२ ज्येष्ठशुक्लदशम्या तपत्याः तीरे सांनेश्वरे लिखितं संस्कृतटीका केवलास्ति। टीकाया नाम न विद्यते। श्लोक संख्या १२४। पत्राणि ३२।

घ ४ संकेत–संवत् १६९५ कार्तिक वदी १ वीरमगाम-मध्ये लिखितं। मूलेन सह अवचूरी टीका। श्लोकसंख्या १२५। पत्राणि १४।

ङ ५ संकेत–संवत् १७०४ आश्विन वदी २ सोमे केवला मल्लिनाथी संजीवनी नाम्नी टीका मेघसन्देशः इति ग्रन्थाभिधेयं। श्लोक संख्या १२३। पत्राणि ३४।

च ६ संकेत–संवत् १७१६ कार्तिकमासेऽसिते पक्षे १३ कर्मनाम्ना मुनि नयनविमलेन। मूलमात्रं श्लोकसंख्या १२६। पत्राणि १९।

छ ७ संकेत संवत् १५२३ प्रायः। मूलमात्र। श्लोकसंख्या १२५। पत्राणि १९।

मल्लिनाथस्य टीकाया नाम कैश्चित् सारोद्धारिणीत्युच्यते तन्न युक्त मल्लिनाथस्य टीकाया नाम संजीवनी एव।

## हस्तलिखित-पुस्तकानां संकेतः

| श्लोकारम्भः | क | ख | ग | घ | ङ | च | छ |
|---|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ | ७ |
| कश्चित्कान्ता | १ | १ | १ | १ | १ | १ | १ |
| तस्मिन्नद्रौ | २ | २ | २ | २ | २ | २ | २ |
| तस्य स्थित्वा | ३ | ३ | ३ | ३ | ३ | ३ | ३ |
| प्रत्यासन्ने | ४ | ४ | ४ | ४ | ४ | ४ | ४ |

| श्लोकारम्भः | क | ख | ग | घ | ङ | च | छ |
|---|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ | ७ |
| धूमज्योति | ५ | ५ | ५ | ५ | ५ | ५ | ५ |
| जातं वंशे | ६ | ६ | ६ | ६ | ६ | ६ | ६ |
| संतप्तानां | ७ | ७ | ७ | ७ | ७ | ७ | ७ |
| त्वामारूढं | ८ | ८ | ८ | ८ | ८ | ८ | ८ |
| मन्दं मन्दं | ९ | ९ | ९ | ९ | ९ | ९ | ९ |
| तां चावश्यं | १० | १० | १० | १० | १० | १० | १० |
| कर्तुं यच्च | ११ | ११ | ११ | ११ | ११ | ११ | ११ |
| आपृच्छस्व | १२ | १२ | १२ | १२ | १२ | १२ | १२ |
| मार्गं तावत् | १३ | १३ | १३ | १३ | १३ | १३ | १३ |
| अद्रेः शृंगं | १४ | १४ | १५ | १४ | १४ | १४ | १४ |
| रत्नच्छाया | १५ | १५ | १५ | १५ | १५ | १५ | १५ |
| त्वय्यायत्तं | १६ | १६ | १६ | १६ | १६ | १६ | १६ |
| त्वामासार | १७ | १७ | १७ | १७ | १७ | १७ | १७ |
| अध्वक्लान्तं | १८ | + | १८ | १८ | × | १८ | १८ |
| छन्नोपान्तः | १९ | १८ | १९ | १९ | १८ | १९ | १९ |
| स्थित्वा तस्मिन् | २० | १९ | २० | २० | १९ | २० | २० |
| तस्यास्तिक्तैः | २१ | २० | २१ | २१ | २० | २१ | २१ |
| नीपं दृष्ट्वा | २२ | २१ | २२ | २२ | २१ | २२ | २२ |
| अम्भोविन्दु | २३ | २२ | २३ | २३ | २२ | २३ | २४ |
| उत्पश्यामि | २४ | २३ | २४ | २४ | २३ | २४ | २३ |
| पाण्डुच्छाया | २५ | २४ | २५ | २५ | २४ | २५ | २५ |
| तेषां दिक्षु | २६ | २५ | २६ | २६ | २५ | २६ | २६ |
| नीचैराख्यं | २७ | २६ | २७ | २७ | २६ | २७ | २७ |
| विश्रान्तः सन् | २८ | २७ | २८ | २८ | २७ | २८ | २८ |
| वक्रः पन्थाः | २९ | २८ | २९ | २९ | २८ | २९ | २९ |
| वीचिक्षोभ | ३० | २९ | ३० | ३० | २९ | ३० | ३० |
| वेणीभूत | ३१ | ३० | ३१ | ३१ | ३० | ३१ | ३१ |
| प्राप्यावन्ती | ३२ | ३१ | ३२ | ३२ | ३१ | ३२ | ३२ |
| दीर्घीकुर्वन् | ३३ | ३२ | ३३ | ३३ | ३२ | ३३ | ३५ |

| श्लोकारम्भ | क | ख | ग | घ | ङ | च | छ |
|---|---|---|---|---|---|---|---|
| , | १ | २ | ३ | ४ | ५ | ६ | ७ |
| हारांस्तारान् | ३४ | ३३ | ३४ | ३४ | ३३ | ३४ | ३३ |
| प्रद्योतस्य | ३५ | ३४ | ३५ | ३५ | ३४ | ३५ | ३४ |
| आलोद्गीर्णः | ३६ | ३६ | ३६ | ३६ | ३६ | ३६ | ३६ |
| भर्तुः कंठ | ३७ | ३७ | ३७ | ३७ | ३७ | ३७ | ३७ |
| अप्यन्यस्मिन् | ३८ | ३८ | ३८ | ३८ | ३८ | ३८ | ३८ |
| पादन्यास | ३९ | ३९ | ३९ | ३९ | ३९ | ३९ | ३९ |
| पश्चादुच्चै | ४० | ४० | ४० | ४० | ४० | ४० | ४० |
| गच्छन्तीनां | ४१ | ४१ | ४१ | ४१ | ४१ | ४१ | ४१ |
| तां कस्यांचित् | ४२ | ४२ | ४२ | ४२ | ४२ | ४२ | ४२ |
| तस्मिन् काले | ४३ | ४३ | ४३ | ४३ | ४३ | ४३ | ४३ |
| गंभीरायाः | ४४ | ४४ | ४४ | ४४ | ४४ | ४४ | ४४ |
| तस्या किंचित् | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ | ४५ |
| त्वं निष्पन्दो | ४६ | ४६ | ४६ | ४६ | ४६ | ४६ | ४६ |
| तत्र स्कन्दं | ४७ | ४७ | ४७ | ४७ | ४७ | ४७ | ४८ |
| ज्योतिर्लेखा | ४८ | ४८ | ४८ | ४८ | ४८ | ४८ | ४८ |
| आराध्यैनं | ४९ | ४९ | ४९ | ४९ | ४९ | ४९ | ४९ |
| त्वय्यादातुं | ५० | ५० | ५० | ५० | ५० | ५० | ५० |
| तामुत्तीर्य | ५१ | ५१ | ५१ | ५१ | ५१ | ५१ | ५१ |
| ब्रह्मावर्तं | ५२ | ५२ | ५२ | ५२ | ५२ | ५२ | ५२ |
| हित्वा हाला | ५३ | ५३ | ५३ | ५३ | ५३ | ५३ | ५३ |
| तस्माद् गच्छेः | ५४ | ५४ | ५४ | ५४ | ५४ | ५४ | ५४ |
| तस्याः पातुं | ५५ | ५५ | ५५ | ५५ | ५५ | ५५ | ५५ |
| आसीनानां | ५६ | ५६ | ५६ | ५६ | ५६ | ५६ | ५६ |
| तं चेद् वायौ | ५७ | ५७ | ५७ | ५७ | ५७ | ५७ | ५७ |
| ये संरंभो | ५८ | ५८ | ५८ | ५८ | ५८ | ५८ | ५८ |
| तत्र व्यक्तं | ५९ | ५९ | ५९ | ५९ | ५९ | ५९ | ५९ |
| शब्दायन्ते | ६० | ६० | ६० | ६० | ६० | ६० | ६० |
| प्रालेयाद्रे | ६१ | ६१ | ६१ | ६१ | ६१ | ६१ | ६१ |
| गत्वा चोर्ध्वं | ६२ | ६२ | ६२ | ६२ | ६२ | ६२ | ६२. |

| श्लोकारम्भः | क | ख | ग | घ | ङ | च | छ |
|---|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ | ७ |
| तत्पश्यामि | ६३ | ६३ | ६३ | ६३ | ६३ | ६२ | ६३ |
| तस्मिन् हित्वा | ६४ | ६४ | ६४ | ६४ | ६४ | ६३ | ६४ |
| तत्रावश्यं | ६५ | ६५ | ६५ | ६५ | ६५ | ६४ | ६५ |
| हेमाम्भोज | ६६ | ६६ | ६६ | ६६ | ६६ | ६५ | ६६ |
| तस्योत्सगे | ६७ | ६७ | ६७ | ६७ | ६७ | ६६ | ६७ |
| विद्युद्दन्तं | ६८ | ६८ | ६८ | ६८ | ६८ | ६७ | ६८ |
| शष्पश्यामा | ६९ | ६२ | ६९ | ६९ | ३५ | ७५ | ६९ |
| आनन्दोत्थं | ७० | ७१ | ७१ | ७० | ७१ | ७० | ७१ |
| यस्यां यक्षाः | ७१ | ७२ | ५२ | ७७ | ७२ | ६९ | ७६ |
| गत्युत्कम्पा | ७२ | ७८ | ७७ | ७४ | ७८ | ७० | ८० |
| नीवीबन्धो | ७३ | ७४ | ७४ | ७१ | ७४ | ७१ | ७९ |
| हस्ते लीला | ७४ | ६९ | ८० | ७३ | ६७ | ६७ | ७० |
| यस्यां मत्त | ७५ | ७० | ७५ | ७५ | ७० | ७८ | ७२ |
| अक्षीणान्त | ७६ | ७७ | ७६ | × | ७७ | × | ७४ |
| यत्रानीता | ७७ | ७५ | ७८ | ७९ | ७५ | ७१ | ७८ |
| मन्दाकिन्याः | ७८ | [illegible] | ७३ | ७२ | ७३ | ७१ | ७३ |
| यत्र स्त्रीणां | ७९ | ७६ | ७९ | ७६ | ७६ | ७३ | ७७ |
| मत्वा देवं | ८० | ७९ | ८० | ८० | ७९ | ७४ | ८१ |
| वासश्चित्रं | ८१ | ८० | ८१ | ७८ | ८० | ७५ | ७५ |
| तत्रागारं | ८२ | ८१ | ८२ | ८१ | ८१ | ७६ | ८० |
| वापी चास्मिन् | ८३ | ८२ | ८३ | ८२ | ८२ | ७७ | ८१ |
| तस्यास्तीरे | ८४ | ८३ | ८४ | ८३ | ८३ | ७८ | ८२ |
| रक्ताशोक | ८५ | ८४ | ८५ | ८४ | ८४ | ७९ | ८३ |
| तन्मध्ये च | ८६ | ८५ | ८६ | ८५ | ८५ | ८० | ८४ |
| एभिः साधो | ८७ | ८६ | ८७ | ८६ | ८६ | ८१ | ८५ |
| गत्वा सद्यः | ८८ | ८७ | ८८ | ८७ | ८७ | ८२ | ८६ |
| तन्वी श्यामा | ८९ | ८८ | ८९ | ८८ | ८८ | ८३ | ८७ |
| तां जानीयाः | ९० | ८९ | ९० | ८९ | ८९ | ८४ | ८८ |
| नूनं तस्याः | ९१ | ९० | ९१ | ९० | ९० | ८५ | ८९ |

| श्लोकारम्भः | क १ | ख २ | ग ३ | घ ४ | ङ ५ | च ६ | छ ७ |
|---|---|---|---|---|---|---|---|
| आलोके ते | ९२ | ९१ | ९२ | ९१ | ९१ | ८६ | ९० |
| उत्सङ्गे वा | ९३ | ९२ | ९३ | ९२ | ९२ | ८७ | ९२ |
| शेषान्मासान् | ९४ | ९३ | ९४ | ९५ | ९३ | ८८ | ९१ |
| सव्यापारा | ९५ | ९४ | ९५ | ९६ | ९४ | १०३ | ९३ |
| आधिक्षामां | ९६ | ९५ | ९६ | ९३ | ९५ | ९५ | ९४ |
| निःश्वासेना | ९७ | ९७ | ९७ | ९४ | ९७ | ९६ | ९५ |
| आद्ये बद्धा | ९८ | ९८ | ९८ | ९७ | ९८ | ९७ | ९६ |
| पादानिन्दो | ९९ | ९६ | ९९ | ९८ | ९६ | ९८ | ९० |
| सा संन्यस्ता | १०० | ९९ | × | ९९ | ९९ | ९९ | ९८ |
| जाने सख्या | १०१ | १०० | १०० | १०० | १०० | १०० | ९९ |
| रुद्धापाङ्ग | १०२ | १०१ | १०१ | १०१ | १०१ | १०१ | १०० |
| वामश्चास्याः | १०३ | १०२ | १०२ | १०२ | १०२ | १०२ | १०१ |
| तस्मिन्काले | १०४ | १०३ | १०३ | १०३ | १०३ | १०४ | १०२ |
| तामुत्थाप्य | १०५ | १०४ | १०४ | १०४ | १०४ | १०५ | १०३ |
| भर्तुर्मित्रं | १०६ | १०५ | १०५ | १०५ | १०५ | १०६ | १०४ |
| इत्याख्याते | १०७ | १०६ | १०६ | १०६ | १०६ | १०७ | १०५ |
| तामायुष्मन् | १०८ | १०७ | १०७ | १०७ | १०७ | १०८ | १०६ |
| अङ्गेनाङ्गं | १०९ | १०८ | १०८ | १०८ | १०८ | १०९ | १०७ |
| शब्दाख्येयं | ११० | १०९ | १०९ | १०९ | १०९ | ११० | १०८ |
| श्यामास्वङ्गं | १११ | ११० | ११० | ११० | ११० | १११ | १०९ |
| धारासिक्त | ११२ | × | १११ | १११ | × | ११२ | ११० |
| त्वामालिख्य | ११३ | १११ | ११२ | ११२ | १११ | १०३ | १११ |
| मामाकाश | ११४ | ११२ | ११३ | ११३ | ११२ | ११६ | ११२ |
| भित्त्वा सद्यः | ११५ | ११३ | ११४ | ११४ | ११३ | ११५ | ११३ |
| संक्षिप्यन्ते | ११६ | ११४ | ११५ | ११६ | ११४ | ११४ | ११४ |
| इत्यात्मानं | ११७ | ११५ | ११६ | ११५ | ११५ | ११७ | ११५ |
| शापान्तो मे | ११८ | ११६ | ११७ | ११७ | ११६ | ११८ | ११६ |
| भूयश्चाह | ११९ | ११७ | ११८ | ११८ | ११७ | ११९ | ११७ |

| श्लोकारम्भ | क | ख | ग | घ | ङ | च | छ |
|---|---|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५ | ६ | ७ |
| एतस्मान्मां | १२० | ११८ | ११९ | ११९ | ११८ | १२० | ११८ |
| आश्वास्यैवं | १२१ | ११९ | १२० | १२० | ११९ | १२२ | ११९ |
| कच्चित्सौम्य | १२२ | १२० | १२१ | १२१ | १२० | १२१ | १२० |
| एतत्कृत्वा | १२३ | १२१ | १२२ | १२२ | १२१ | १२३ | १२१ |
| तस्मादद्रे | १२४ | × | × | × | × | × | × |
| त संदेश | १२५ | × | १२३ | १२३ | १२२ | १२४ | १२२ |
| श्रुत्वा वार्ता | १२६ | × | १२४ | १२४ | १२३ | १२५ | १२३ |
| इत्थभूतं | १२७ | × | × | १२५ | × | १२६ | × |



# मेघदूत-श्लोकानां अकाराद्यनुक्रमणिका

